
शौनकादि ऋषि
सूत
श्रीव्यास
ऋषि

श्रीगणेशाय नमः ॥ अथ प्रथमोनुक्रमाणिकाऽध्याय आरभ्यते ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥ नमस्तस्मै वराहाय लीलयोद्धरते महीम् ॥ खुरमध्यगतो यस्य मेरुः खणखणायते ॥ १ ॥ दंष्ट्राग्रेणोऽद्धृता गौरुदधिपरिवृता पर्वतैर्निम्नगाभिः साकं मृत्पिण्डवत्प्राग्बृहदुरुवपुषाऽनन्तरूपेण येन ॥ सोऽयं कंसासुरारिर्मुरनरकदशास्यान्तकृत्सर्वसंस्थः कृष्णो विष्णुः सुरेशो नुदतु मम रिपूनादिदेवो वराहः ॥ २ ॥ सूत उवाच ॥ यस्मिन्काले क्षितिः पूर्वं वराहवपुषा तु सा ॥ उद्धृता विभुना शक्त्या पप्रच्छ परमेश्वरम् ॥ ३ ॥ धरण्युवाच ॥ कल्पे कल्पे भवानेवं मां समुद्धरति प्रभो ॥ न चाहं वेद ते मूर्तिमादिसर्गे च केशव ॥४॥ वेदेषु चैव नष्टेषु मत्स्यो भूत्वा रसातलात् ॥ प्रविश्य तानथोत्कृष्य ब्रह्मणे दत्तवानसि ॥ ५ ॥ अन्यत्सुरासुरामिते त्वं समुद्रस्य मन्थने ॥ धृतवानसि कौर्म्येण मन्दरं मधुसूदन ॥ ६ ॥ पुनश्च गां जगन्नाथ निमज्जन्तीं रसातलात् ॥ उज्जहारैकदंष्ट्रेण भगवन्नै महार्णवात् ॥ ७ ॥ अन्यद्धिरण्यकशिपुर्वरदानेन दर्पितः ॥ आबाधमानः पृथिवीं स त्वया विनिपातितः ॥ ८ ॥ पुनर्निःक्षत्रिया देव त्वया चापि पुरा कृता ॥ जामदग्न्येन रामेण त्वया भूत्वा सकृत्प्रभो ॥ ९ ॥ पुनश्च रावणो रक्षः क्षपितं क्षात्रतेजसा ॥ बलिः प्रबद्धो भगवंस्त्वया वामनरूपिणा ॥ १० ॥ न च जानाम्यहं देव तव किंचिद्विचेष्टितम् ॥ उद्धृत्य मां कथं सृष्टिं सृजसे किंच कारणम् ॥ ११ ॥ सकृद्ध्रियेत कृत्वा च पाल्यते चापि केन वा ॥ केन वा सुलभो देवो भवेस्त्वं सततं विभो ॥ १२ ॥ कथं च सृष्टेरादिः स्यादवसानं कथं भवेत् ॥ कथं युगस्य गणना संख्याऽस्यानु चतुर्युगम् ॥ १३ ॥ को वा विशेषस्तेष्वस्मिन्का वा वाञ्छा महेश्वर ॥ यज्वानः के च राजानः के च सिद्धिं परां गताः ॥ १४ ॥ एतत्सर्वं समासेन कथयस्व प्रसीद मे ॥ इत्युक्तः क्रोडरूपेण जहास परमेश्वरः ॥ १५ ॥ हसतस्तस्य कुक्षौ तु जगद्धात्री ददर्श ह ॥ रुद्रान्देवान्सह वसून्सिद्धसंघान्महर्षिभिः ॥ १६ ॥ सचन्द्रसूर्यग्रहसप्तलोकानन्तःस्थितांस्तत्र उपात्तधर्मान् ॥ इतीदृशं पश्यति सा समस्तं यावत्क्षितिर्वेपितसर्वगात्रा ॥ १७ ॥ उन्मीलितास्यस्तु यदा महात्मा दृष्टो धरण्याऽमलसर्वगात्र्या ॥ तावत्स्वरूपेण चतुर्भुजेन महोदधौ सुप्तमथोऽन्वपश्यत् ॥ १८ ॥ शेषपर्यङ्कशयने सुप्तं देवं जनार्दनम् ॥ दृष्ट्वा तन्नाभिपङ्केरुहान्तःस्थं तं चतुर्भुजम् ॥ कृताञ्जलिपुटा देवी स्तुतिं धात्री जगाद ह ॥ १९ ॥ धरण्युवाच ॥ नमः कमलपत्राक्ष

नमस्ते पीतवाससे ॥ नमः सुरारिविध्वंसकारिणे परमात्मने ॥ २० ॥ शेषपर्यंकशयने धृतवृक्षःस्थलश्रिये ॥ नमस्ते सर्वदेवेश नमस्ते मोक्ष
कारिणे ॥ २१ ॥ नमः शार्ङ्गासिचक्राय जन्ममृत्युविवर्जित ॥ नमो नाभ्युत्थितमहाकमलासनजन्मने ॥ २२ ॥ नमो विद्रुमरक्तोष्ठपाणिपल्लव
शोभिने ॥ शरणं त्वां प्रपन्नास्मि त्राहि नारीमनागसम् ॥ २३ ॥ पूर्णनीलाञ्जनाकारं वाराहं ते जनार्दन ॥ दृष्ट्वा भीताऽस्मि भूयोऽपि
जगत्त्वदेहगोचरम् ॥ इदानीं कुरु मे नाथ दयां त्राहि महाप्रभो ॥ २४ ॥ केशवः पातु मे पादौ जंघे नारायणो मम ॥ माधवो मे कटिं पातु
गोविन्दो गुह्यमेव च ॥ २५ ॥ नाभिं विष्णुस्तु मे पातु उदरं मधुसूदनः ॥ उरस्त्रिविक्रमः पातु हृदयं पातु वामनः ॥ २६ ॥ श्रीधरः पातु मे
कण्ठं हृषीकेशो मुखं मम ॥ पद्मनाभस्तु नयने शिरो दामोदरो मम ॥ २७ ॥ एवं न्यस्य हरेर्न्यासं नामानि जगती तदा ॥ नमस्ते भगवन्
विष्णो इत्युक्त्वा विरराम ह ॥ २८ ॥ इति वराहपुराणे अनुक्रमणिकायां प्रथमोऽध्यायः ॥ १ ॥ अथ सृष्टिस्थितियुगमाहात्म्यम् ॥ सूत
उवाच ॥ ततस्तुष्टो हरिर्भक्त्या धरण्यात्मशरीरगः ॥ मायां प्रकाश्य तेनैव स्थितो वाराहमूर्त्तिना ॥ १ ॥ जगाद किं ते सुश्रोणि प्रश्नमेतं
सुदुर्लभम् ॥ कथयामि पुराणस्य विषयं सर्वशास्त्रतः ॥ २ ॥ पुराणानां हि सर्वेषामयं साधारणः स्मृतः ॥ श्लोकं धरणि निश्चित्य निःशेषं
त्वमतः शृणु ॥ ३ ॥ श्रीवराह उवाच ॥ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ ४ ॥ आदिसर्गं
महं तावत्कथयामि वरानने ॥ यस्मादारभ्य देवानां राज्ञां चरितमेव च ॥ ५ ॥ ज्ञायते चतुरंशश्च परमात्मा सनातनः ॥ ६ ॥ अथसृष्टिः ॥
आदावहं व्योम महत्ततोऽणुरेकैव मत्तः प्रबभूव बुद्धिः ॥ त्रिधा तु सा सत्त्वरजस्तमोभिः पृथक्पृथक्सत्त्वरूपैरुपेता ॥ ७ ॥ तस्मास्त्रिकेऽहं
तमसो महान्स सदोच्यते सर्वविदां प्रधानः ॥ तस्मादपि क्षेत्रविदूर्ज्जितो यो बभूव बुद्धिस्तु ततो बभूव ॥ ८ ॥ तस्मात्तु तेभ्यः श्रवणादि
हेतवस्ततोऽक्षमाला जगतो व्यवस्थिताः ॥ भूतैर्गतैरेव च पिण्डमूर्तिर्मया भद्रे विहिता त्वात्मनैव ॥ ९ ॥ शून्यं त्वासीत्तत्र शब्दस्तु खं च
तस्माद्वायुस्तत एवानु तेजः ॥ तस्मादापस्तत एवानु देवि मया सृष्टा भवती भूतधात्री ॥ १० ॥ योगे पृथिव्यां जलवत्ततोऽपि सबुद्बुदं कललं
त्वण्डमेव ॥ तस्मिन्प्रवृद्धिं च गतेऽहमासीदापोमयश्चात्मनात्मानमादौ ॥ ११ ॥ सृष्ट्वा नारस्ता अथो तत्र चाहं येनैव स्यान्नाम नारायणेति ॥

कल्पे कल्पे तत्र शयामि भूयः सुप्तस्य मे नाभिजः स्याद्यथाद्य ॥ १२॥ एवंभूतस्य मे देवि नाभिपद्मे चतुर्मुखः॥उत्तस्थौ स मया प्रोक्तः प्रजाः
सृज महामते ॥१३॥ एवमुक्त्वा तिरोभावं गतोऽहं सोऽपि चिन्तयन् ॥ आस्ते यावज्जगद्धात्रि नाध्यगच्छत्तु किंचन ॥ १४॥ तावत्तस्य महारोषो
ब्रह्मणोऽव्यक्तजन्मनः॥संभूय तेन बालः स्यादेको रोषात्मसंभवः॥१५॥यो रुदन्वारितस्तेन ब्रह्मणाव्यक्तमूर्त्तिना॥ब्रवीति नाम मे देहि तस्य रुद्रेत्य
सौ ददौ॥१६॥सोऽपि तेन सृजस्वेति प्रोक्तो लोकमिमं शुभे॥अशक्तः सोऽथ सलिले ममज्ज तपसे धृतः ॥१७॥तस्मिन्सलिलमग्ने तु पुनरन्यं
प्रजापतिम्॥ब्रह्मा ससर्ज्ज भूतेषु दक्षिणाङ्गुष्ठतः परम्॥१८॥वामे चैव तथाङ्गुष्ठे तस्य पत्नीमथासृजत् ॥१९॥स तस्यां जनयामास मनुं स्वायं
भुवं प्रभुः॥तस्मात्संभाविता बुद्धिः प्रजानां ब्रह्मणा पुरा ॥२० ॥ धरण्युवाच ॥ विस्तरेण समाचक्ष्व आदिसर्गं सुरेश्वर॥ब्रह्मा नारायणाख्योऽयं
कल्पादौ चाभवद्यथा ॥२१॥श्रीभगवानुवाच॥ससर्ज सर्वभूतानि यथा नारायणात्मकः॥कथ्यमानं मया देवि तदशेषं क्षिते शृणु॥२२॥गतकल्पा
वसाने तु निशि सुप्तः स्थितः शुभे ॥ सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत ॥ २३ ॥ नारायणः परोऽचिन्त्यः पराणामपि पूर्वजः ॥ ब्रह्म
स्वरूपो भगवाननादिः सर्वसम्भवः ॥ २४ ॥ इदं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥ ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् ॥ २५ ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥ २६ ॥ सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा
पुरा ॥ अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः ॥ २७ ॥ तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ॥ अविद्या पंचपर्वैषा प्रादुर्भूता महा
त्मनः ॥ २८ ॥ पंचधावस्थितः सर्गो ध्यायतः प्रतिबोधवान् ॥ स मुख्यसर्गो विज्ञेयः सर्गविद्भिर्विचक्षणैः ॥२९॥ पुनरन्यमभूत्तस्य ध्यायतः
सर्गमुत्तमम् ॥ तिर्यक्स्रोतस्तु वै यस्मात्तिर्यक्स्रोतस्तु वै स्मृतः ॥ ३० ॥ पश्चादपरस्ते विख्याता उत्पथग्राहिणः कृताः ॥ तमप्यसाधनं
मत्वा तिर्यक्स्रोतश्चतुर्मुखः ॥ ३१ ॥ ऊर्द्ध्वस्रोतास्त्रिधा यस्तु सात्त्विको धर्मवर्त्तनः ॥ तथोर्द्ध्वचारिणो देवाः सर्वे गर्भसमुद्भवाः ॥ ३२ ॥ तदा
सृष्ट्वान्यसर्गं तु तदा दध्यौ प्रजापतिः ॥ असाधकांस्तु तान्मत्वा मुख्यसर्गादिसम्भवान् ॥ ३३ ॥ ततः स चिन्तयामास अर्वाक्स्रोतस्तु स
प्रभुः ॥ ॥ अर्वाक्स्रोतसि चोत्पन्ना मनुष्याः साधका मताः ॥ ३४ ॥ ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः ॥ तस्मात्ते

दुःखबहुला भूयोभूयश्च कारिणः ॥ ३५ ॥ इत्येते कथिताः सर्गाः षडेते सुभगे तव ॥ प्रथमो महतः सर्गस्तन्मात्राख्यो द्वितीयकः ॥ ३६॥
वैकारिकस्तृतीयस्तु सर्गश्चेन्द्रियकः स्मृतः ॥ इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्वकः ॥ ३७ ॥ मुख्यसर्गश्चतुर्थस्तु मुख्या वै
स्थावराः स्मृताः ॥ तिर्यक्स्रोतश्च यः प्रोक्तस्तैर्यक्स्रोतः स उच्यते ॥ ३८ ॥ तथोर्द्ध्वस्रोतसां श्रेष्ठः सप्तमः स तु मानवः ॥ अष्टमोऽनुग्रहः
सर्गः सात्त्विकस्तामसश्च सः ॥ ३९ ॥ पंचैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ॥ प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ॥ ४० ॥
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ॥ प्राकृता वैकृताश्चैव जगतो मूलहेतवः ॥ इत्येते कथिताः सर्गाः किमन्यच्छ्रोतुमिच्छसि ॥ ४१ ॥
अथ स्थितिः ॥ धरण्युवाच ॥ नवधा सृष्टिरुत्पन्ना ब्रह्मणोऽव्यक्तजन्मनः ॥ कथं स ववृधे देव एतन्मे कथयाच्युत ॥ ४२ ॥ वराह उवाच ॥
प्रथमं ब्रह्मणा सृष्टा रुद्राद्यास्तु तपोधनाः ॥ सनकादयस्ततः सृष्टा मरीच्याद्य एव च ॥ ४३ ॥ मरीचिरत्रिश्च तथा अङ्गिराः पुलहः क्रतुः॥
पुलस्त्यश्च महातेजाः प्रचेता भृगुरेव च ॥ नारदो दशमश्चैव वसिष्ठश्च महातपाः ॥ ४४ ॥ सनकादयो निवृत्त्याख्ये तेन धर्म्मे प्रयोजिताः ॥
प्रवृत्त्याख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिम् ॥ ४५ ॥ योऽसौ प्रजापतिस्त्वाद्यो दक्षिणाङ्गुष्ठसम्भवः ॥ तस्यादौ तत्र वंशे तु जगदेतच्चराच
रम् ॥ ४६ ॥ देवाश्च दानवाश्चैव गन्धर्वोरगपक्षिणः ॥ सर्वे दक्षस्य कन्यासु जाताः परमधार्मिकाः ॥ ४७ ॥ अथ रुद्रसर्गः ॥ योऽसौ रुद्रेति
विख्यातः पुत्रः क्रोधसमुद्भवः ॥ भ्रुकुटीकुटिलात्तस्य ललाटात्परमेष्ठिनः ॥ ४८ ॥ अर्द्धनारनिरवपुः प्रचण्डोऽतिभयङ्करः ॥ विभजात्मान
मित्युक्त्वा ब्रह्मा चान्तर्दधे पुनः ॥ ४९ ॥ तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं चकार सः ॥ बिभेद पुरुषत्वं च दशधा चैकधा च सः ॥ ५० ॥
ततस्त्वेकादश ख्याता रुद्रा ब्रह्मसमुद्भवाः ॥ ५१ ॥ अयमुद्देशतः प्रोक्तो रुद्रसर्गो मयाऽनघे ॥ अथ युगमाहात्म्यम् ॥ इदानीं युगमाहात्म्यं
कथयामि समासतः ॥ ५२ ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ ५३ ॥ एतस्मिन्ये महासत्त्वा राजानो भूरिदक्षिणाः ॥ देवासुराश्च ये
चक्रुर्धर्म्म कर्म च तच्छृणु ॥ ५४ ॥ आसीत्प्रथमकल्पे तु मनुः स्वायम्भुवः पुरा ॥ तस्य पुत्रद्वयं जज्ञे अतिमानुषचेष्टितम् ॥ ५५ ॥ प्रिय
व्रतोत्तानपादनामानं धर्म्मवत्सलम् ॥ तत्र प्रियव्रतो राजा महायज्वा तपोबलः ॥ ५६ ॥ स चेष्ट्वा विविधैर्यज्ञैर्विपुलैर्भूरिदक्षिणैः ॥ सप्तद्वीपेषु

संस्थाप्य भरतादीन्सुतान्निजान् ॥ स्वयं विशालां वरदां गत्वा तेपे महत्तपः ॥ ५७ ॥ तास्मिन् स्थितस्य तपसि राज्ञो वै चक्रवर्तिनः ॥ उपेयान्नारदस्तत्र दिदृक्षुर्धर्मचारिणम् ॥ ५८ ॥ स दृष्ट्वा नारदं व्योम्नि ज्वलद्भास्करतेजसम् ॥ अभ्युत्थानेन राजेन्द्र उत्तस्थौ हर्षितस्तदा ॥ ५९ ॥ तस्यासनं च पाद्यं च सम्यक्कृत्वा निवेद्य वै ॥ स्वागतादिभिरालापैः परस्परमवोचताम् ॥ ६० ॥ कथान्ते नारदं राजा पप्रच्छ ब्रह्मवादिनम् ॥ ६१ ॥ प्रियव्रत उवाच ॥ भगवन्किंचिदाश्चर्यमेतस्मिन्कृतसंज्ञिते ॥ युगे दृष्टं श्रुतं चापि तन्मे कथय नारद ॥ ६२ ॥ नारद उवाच ॥ आश्चर्यमेकं दृष्टं मे तच्छृणुष्व प्रियव्रत ॥ ह्यस्तनेऽहनि राजेन्द्र श्वेताख्यं गतवानहम् ॥ ६३ ॥ द्वीपं तत्र सरो दृष्टं फुल्लपङ्कजमालिनं ॥ सरसस्तस्य तीरे तु कुमारीं पृथुलोचनाम् ॥ ६४ ॥ दृष्ट्वाहं विस्मयापन्नस्तां कन्यामायतेक्षणाम् ॥ पृष्टवानस्मि राजेन्द्र तदा मधुरभाषिणीम् ॥ ६५ ॥ कासि भद्रे कथं वासि किं वा कार्यमिह त्वया ॥ कर्तव्यं चारुसर्वाङ्गि तन्ममाचक्ष्व शोभने ॥ ६६ ॥ एवमुक्ता मया सा हि मां दृष्ट्वाऽनिमिषेक्षणा ॥ स्मृत्वा तूष्णीं स्थिता यावत्तावन्मे ज्ञानमुत्तमम् ॥ ६७ ॥ विस्मृतं सर्ववेदाश्च सर्वशास्त्राणि चैव हि ॥ योगशास्त्राणि शिक्षाश्च वेदानां स्मृतयस्तथा ॥ ६८ ॥ सर्वं दृष्टेव मे राजन्कुमार्याऽपहृतं क्षणात् ॥ ततोऽहं विस्मयाविष्टश्चिन्ताशोकसमन्वितः ॥ ६९ ॥ तामेव शरणं गत्वा यावत्पश्यामि पार्थिव ॥ तावद्दिव्यः पुमांस्तस्याः शरीरे समदृश्यत ॥ ७० ॥ तस्यापि पुंसो हृदये त्वपरस्तस्य चोरसि ॥ अन्यो रक्तेक्षणः श्रीमान्द्वादशादित्यसन्निभः ॥ ७१ ॥ एवं दृष्टाः पुमांसोऽत्र त्रयः कन्याशरीरगाः ॥ क्षणेन तत्र कन्यैका न तान्पश्यामि सुव्रत ॥ ७२ ॥ ततः पृष्टा मया देवी सा कुमारी कथं मम ॥ वेदा नष्टा ममाचक्ष्व भद्रे तन्नाशकारणम् ॥ ७३ ॥ कन्योवाच ॥ माताहं सर्ववेदानां सावित्री नाम नामतः ॥ मां न जानासि येन त्वं ततो वेदा हृतास्तव ॥ ७४ ॥ एवमुक्ते तया राजन्विस्मयेन तपोधन ॥ पृष्टा त एते पुरुषा एतत्कथय शोभने ॥ ७५ ॥ कन्योवाच ॥ य एष मच्छरीरस्थः सर्वाङ्गश्चारुशोभनः ॥ एष ऋग्वेदनामा तु वेदो नारायणः स्वयम् ॥ वह्निभूतो दहत्याशु पापान्युच्चारणादनु ॥ ७६ ॥ एतस्य हृदये योऽयं दृष्ट आसीत्त्वयात्मजः ॥ स यजुर्वेदरूपेण स्थितो ब्रह्मा महाबलः ॥ ७७ ॥ तस्याप्युरसि संविष्टो य एष शुचिरुज्ज्वलः ॥ स सामवेदनामा तु रुद्ररूपी व्यवस्थितः ॥ ७८ ॥ एष

आदित्यवत्पापान्याशु नाशयते स्मृतः ॥७९॥ एते त्रयो महावेदा ब्रह्मन्देवास्त्रयः स्मृताः ॥ एते वर्णा अकाराद्याः सवनान्यत्र वै द्विज ॥ ८० ॥ एतत्सर्वं समासेन कथितं ते द्विजोत्तम ॥ गृहाण वेदाञ्छास्त्राणि सर्वज्ञत्वं च नारद ॥ ८१ ॥ एतस्मिन्वेदसरसि स्नानं कुरु महाद्विज ॥ कृते स्नानेऽन्यजन्मीयं येन स्मरसि सत्तम ॥ ८२॥ एवमुक्त्वा तिरोभावं गता कन्या नराधिप ॥ अहं तत्र कृतस्नानस्त्वां दिदृक्षुरिहागतः ॥८३ ॥ इति वराहपुराणे आदिभूतसृष्टिस्थितियुगमाहात्म्यवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥ अथ नारदप्राग्जन्मवृत्तान्तः ॥ प्रियव्रत उवाच ॥ अन्यस्मिन्भगवञ्जन्मन्यासीद्यत्त्वद्विचेष्टितम् ॥ सर्वं कथय देवर्षे महत्कौतूहलं हि मे ॥ १ ॥ नारद उवाच ॥ स्नातस्य मम राजेन्द्र तस्मिन्वेद सरस्यथ ॥ सावित्र्याश्च वचः श्रुत्वा तस्मिन् जन्मसहस्रिकम् ॥ स्मरणं तत्क्षणाज्जातं शृणु जन्मान्तरं मम ॥२॥ अस्त्यवन्तीपुरं राजंस्तत्राहं प्राग्द्विजोत्तमः ॥ नाम्ना सारस्वतः पूर्वं वेदवेदाङ्गपारगः ॥ ३ ॥ बहुभृत्यपरीवारो बहुधान्यश्च पार्थिव ॥ अन्यस्मिन् कृतसंज्ञे तु युगे परम बुद्धिमान् ॥४॥ ततो ध्यातं मयैकान्ते किमनेन करोम्यहम् ॥ द्वन्द्वेन सर्वमेतद्धि न्यस्य पुत्रेषु याम्यहम् ॥ तपसे धृतसङ्कल्पः सरः सारस्वतं द्रुतम् ॥ ५ ॥ एवं चिन्त्य मया पृष्टः कर्मकाण्डेन केशवः ॥ श्राद्धैश्च पितरो देवा यज्ञैश्चान्ये तथा जनाः ॥ ६ ॥ ततोऽहं निर्गतो राजंस्तपसे धृतमानसः ॥ सारस्वतं नाम सरो यदेतत्पुष्करं स्मृतम् ॥ ७ ॥ तत्र गत्वा मया विष्णुः पुराणः पुरुषः शिवः ॥ आराधितो मया भक्त्या जपं नारायणात्मकम् ॥ ८ ॥ ब्रह्मपारमयं राजञ्जपता परमस्तवम् ॥ ततो मे भगवांस्तुष्टः प्रत्यक्षत्वं जगाम ह ॥ ९ ॥ प्रियव्रत उवाच ॥ कीदृशं ब्रह्मपारं तु श्रोतुमिच्छामि सत्तम ॥ कथयस्व प्रसादेन देवर्षे सुप्रसन्नधीः ॥ १० ॥ नारद उवाच ॥ परं पराणामृतं पुराणं पारं परं विष्णुमनन्तवीर्यम् ॥ नमामि नित्यं पुरुषं पुराणं परायणं पारगतं पराणाम् ॥११॥ पुरातनं त्वप्रतिमं पुराणं परापरं पारगमुग्रतेजसम् ॥ गम्भीरगम्भीरधियां प्रधानं नतोऽस्मि देवं हरिमीशितारम् ॥ १२ ॥ परात्परं चापरमं प्रधानं परास्पदं शुद्धपदं विशालम् ॥ परात्परेशं पुरुषं पुराणं नारायणं स्तौमि विशुद्धभावः ॥ १३ ॥ पुरा पुरं शून्यमिदं ससर्ज तदा स्थितत्वात्पुरुषः प्रधानम् ॥ जने प्रसिद्धः शरणं ममास्तु नारायणो वीतमलः पुराणः ॥१४॥ पारं परं विष्णुमपाररूपं पुरातनं नीतिमतां प्रधानम् ॥ धृतक्षमं शान्तिधरं क्षितीशं

शुभं सदा स्तौमि महानुभावम् ॥ १५ ॥ सहस्रमूर्द्धानमनन्तपादमनन्तबाहुं शशिसूर्यनेत्रम् ॥ तमक्षरं क्षीरसमुद्रनिद्रं नारायणं स्तौम्यमृतं
परेशम् ॥ १६ ॥ त्रिवेदगम्यं त्रिनवैकमूर्तिं त्रिशुक्लसंस्थं त्रिहुताशभेदम् ॥ त्रितत्त्वलक्ष्यं त्रियुगं त्रिनेत्रं नमामि नारायणमप्रमेयम् ॥ १७ ॥
कृते सितं रक्ततनुं तथा च त्रेतायुगे पीततनुं पुराणम् ॥ तथा हरिं द्वापरतः कलौ च कृष्णीकृतात्मानमथो नमामि ॥ १८ ॥ ससर्ज यो
वक्त्रत एव विप्रान्भुजान्तरे क्षत्रमथोरुयुग्मे ॥ विशः पदाग्रेषु तथैव शूद्रान्नमामि तं विश्वतनुं पुराणम् ॥ १९ ॥ परात्परं पारगतं प्रमेयं युधाम्पतिं
कार्यत एव कृष्णम् ॥ गदासिचर्म्मण्यभृतोत्थपाणिं नमामि नारायणमप्रमेयम् ॥ २० ॥ इति स्तुतो देववरः प्रसन्नो जगाद मां नीरदतुल्य
घोषः ॥ वरं वृणीष्वेत्यसकृत्ततोऽहं तस्यैव देहे लयमिष्टवांश्च ॥ २१ ॥ इति श्रुत्वा वचो मह्यं देवदेवः सनातनः ॥ उवाच प्रकृतिं
गच्छ विप्रेतत्तु प्रयोजनम् ॥ २२ ॥ नारं पानीयमित्युक्तं पितॄणां तद्ददौ भवान् ॥ तदाप्रभृति ते नाम नारदेति भविष्यति ॥ २३ ॥ एवमुक्त्वा
गतो देवः सद्योऽदर्शनमुत्सुकः ॥ अहं कलेवरं त्यक्त्वा कालेन तपसा तदा ॥ ब्रह्मलोके लयं प्राप्तः पुनरुत्पत्तिं च पार्थिव ॥ २४ ॥ दिवसश्च
पुनः सृष्टो दशभिस्तनयैः सह ॥ दिनादियौ हि देवस्य ब्रह्मणोऽव्यक्तजन्मनः ॥ २५ ॥ स सृष्ट्यादिः समस्तानां देवादीनां न संशयः ॥ सर्वस्य
जगतः सृष्टिरेषैव प्रभुधर्मतः ॥ २६ ॥ एतन्मे प्राकृतं जन्म यन्मां पृच्छसि पार्थिव ॥ यस्मान्नारायणं ध्यात्वा प्राप्तोऽस्मि गुरुतां नृप ॥ २७ ॥
तस्मात्त्वमपि राजेन्द्र भव विष्णुपरायणः ॥ २८ ॥ इति वराहपुराणे आदिभूतवृत्तान्ते नारदप्राग्जन्मवृत्तान्तनिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥
अथ नारायणव्यापकत्वम् ॥ धरण्युवाच ॥ योऽसौ नारायणो देवः परमात्मा सनातनः ॥ भगवान्सर्वभावेन उताहो नेति शंस मे ॥ १ ॥
वराह उवाच ॥ मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः ॥ रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥ २ ॥ इत्येताः कथितास्तस्य
मूर्त्तयो भूतधारिणि ॥ दर्शनं प्राप्तुमिच्छूनां सोपानानि च शोभने ॥ ३ ॥ यत्तस्य परमं रूपं तन्न पश्यन्ति देवताः ॥ अस्मदादिस्वरूपेण
पूरयन्ति ततो धृतिम् ॥ ४ ॥ ब्रह्मा भगवतो मूर्ती राजसस्तामसस्तथा ॥ याभिः संस्थाप्यते विश्वं स्थितौ सञ्चाल्यते च ह ॥ ५ ॥ त्वमेका
तस्य देवस्य मूर्त्तिराद्या धरा धरे ॥ द्वितीया सलिलं मूर्त्तिस्तृतीया तैजसी स्मृता ॥ ६ ॥ चतुर्थी वायुमूर्त्तिः स्यादाकाशाख्या तु

पञ्चमी ॥ एतास्तु मूर्तयस्तस्य क्षेत्रज्ञस्त्वं हि मद्भियाम् ॥ मूर्तित्रयं तथा तस्य इत्येताश्चाष्टमूर्तयः ॥ ७ ॥ अभिध्यातमिदं सर्वं जगन्नारा
यणेन ह ॥ इत्येतत्कथितं देवि किमन्यच्छ्रोतुमिच्छसि ॥८॥ धरण्युवाच ॥ नारदेनैवमुक्तस्तु तदा राजा प्रियव्रतः ॥ कृतवान्किं ममाचक्ष्व
प्रसादात्परमेश्वरः ॥ ९ ॥ वराह उवाच ॥ भवतीं सप्तधा कृत्वा पुत्राणां च प्रदाय सः ॥ प्रियव्रतस्तपस्तेपे नारदाच्छ्रुतविस्मयः ॥ १० ॥
नारायणात्मकं ब्रह्म परं जप्त्वा स्वयम्भुवः ॥ ततः स तद्गतमनाः परं निर्वाणमाप्तवान् ॥ ११ ॥ शृणु चान्यद्वरारोहे यद्वृत्तं परमेष्ठिनः ॥
आराधनाय च यतः पुराकाले नृपस्य ह ॥ १२ ॥ आसीदश्वशिरा नाम राजा परमधार्मिकः ॥ सोऽश्वमेधेन यज्ञेन यष्ट्वा सुबहुदक्षिणाः ॥ १३ ॥
स्नातश्चावभृथे सोऽथ ब्राह्मणैः परिवारितः ॥ यावदास्ते स राजर्षिस्तावद्योगिवरो मुनिः ॥ आययौ कपिलः श्रीमाञ्जैगीषव्यश्च योगिराट् ॥ १४ ॥
ततस्त्वरितमुत्थाय स राजा स्वागतक्रियाम् ॥ चकार परया युक्तः स मुदा राजसत्तमः ॥ १५ ॥ तावर्चितावासनगौ दृष्ट्वा देवौ महाव्रतौ ॥
पप्रच्छ तौ तिग्मधियौ योगज्ञौ स्वेच्छयागतौ ॥ १६ ॥ भवन्तौ संशयं विप्रौ पृच्छामि पुरुषेश्वरौ ॥ कथमाराधये देवं हरिं नारायणं
परम् ॥ १७ ॥ विप्रावूचतुः ॥ क एष प्रोच्यते राजंस्त्वया नारायणो गुरुः ॥ आवां नारायणौ द्वौ तु त्वत्प्रत्यक्षगतौ नृप ॥ १८ ॥ अश्व
शिरा उवाच ॥ भवन्तौ ब्राह्मणौ सिद्धौ तपसा दग्धकिल्बिषौ ॥ कथं नारायणावावामिति वाक्यमथेरितम् ॥ १९ ॥ शङ्खचक्रगदापाणिः
पीतवासा जनार्दनः ॥ गरुडस्थो महादेवः कस्तस्य सदृशो भुवि ॥ २० ॥ तस्य राज्ञो वचः श्रुत्वा तौ विप्रौ संशितव्रतौ ॥ जहसतुः पश्य
विष्णुं राजन्निति जजल्पतुः ॥ २१ ॥ एवमुक्त्वा स कपिलः स्वयं विष्णुर्बभूव सः ॥ जैगीषव्यश्च गरुडस्तत्क्षणं समजायत ॥ २२ ॥ ततो
हाहाकृतं त्वासीत्तत्क्षणाद्राजमण्डलम् ॥ दृष्ट्वा नारायणं देवं गरुडस्थं सनातनम् ॥ २३ ॥ कृताञ्जलिपुटो भूत्वा ततो राजा महायशाः ॥
उवाच शाम्यतां विप्रौ नायं विष्णुरथेदृशः ॥ २४ ॥ यस्य ब्रह्मा समुत्पन्नो नाभिपङ्कजमध्यगः ॥ तस्माच्च ब्रह्मणो रूढः स विष्णुः परमे
श्वरः ॥ २५ ॥ इति राजवचः श्रुत्वा तदा तौ मुनिपुङ्गवौ ॥ चक्रतुः परमां मायां योगमायां विशेषतः ॥ २६ ॥ कपिलः पद्मनाभस्तु
जैगीषव्यः प्रजापतिः ॥ कमलस्थो बभौ ब्रह्मा तस्माद्रुद्रः प्रभाकरः ॥ २७ ॥ ददर्श राजा रक्ताक्षं कालानलसमद्युतिम् ॥ नेत्रयो

भवति विश्वेशो मायैषा योगिनां सदा ॥ २८ ॥ सर्वव्यापी हरिः श्रीमानिति राजा जगाद ह ॥ ततो वाक्यावसाने तु तस्य राज्ञो हि
संसदि ॥ २९ ॥ मत्कुणा मशका यूका भ्रमराः पक्षिणोरगाः ॥ ३० ॥ अश्वा गावो द्विपाः सिंहा व्याघ्रा गोमायवो मृगाः ॥ अन्येऽपि
पशवः कीटा ग्राम्यारण्याश्च सर्वशः ॥ दृश्यन्ते राजभवने कोटिशो भूतधारिणि ॥ ३० ॥ तद्दृष्ट्वा भूतसङ्घातं राजा विस्मितमानसः ॥ याव
च्चिन्तयते किं स्यादेतादित्यवगम्य च ॥ जैगीषव्यस्य माहात्म्यं कपिलस्य च धीमतः ॥ ३२ ॥ कृताञ्जलिपुटो भूत्वा स राजाश्वशिरा
स्तदा ॥ पप्रच्छ तावृषी भक्त्या किमिदं द्विजसत्तमौ ॥ ३३ ॥ द्विजावूचतुः ॥ आवां पृष्टौ त्वया राजन् कथं विष्णुरिहेज्यते ॥ प्राप्यते च
महाराज तेनेदं दर्शितं तव ॥ ३४ ॥ सर्वज्ञस्य गुणा ह्येते ये राजंस्तव दर्शिताः ॥ स च नारायणो देवः सर्वज्ञः कामरूपवान् ॥ ३५ ॥
सौम्यस्तु संस्थितः क्वापि प्राप्यते मनुजैः किल ॥ आराधनं न चैतस्य परमार्थं भविष्यति ॥ ३६ ॥ किन्तु सर्वशरीरस्थः परमात्मा जग
त्पतिः ॥ स्वदेहे दृश्यते भक्त्या नैकस्थानगतस्तु सः ॥ ३७ ॥ अतोऽर्थं दर्शितं रूपं देवस्य परमात्मनः ॥ आवयोस्तव राजेन्द्र प्रतीतिः
स्याद्यथा तव ॥ ३८ ॥ एवं सर्वगतो विष्णुस्तव देहे जनेश्वर ॥ मन्त्रिणां भृत्यसङ्घस्य सुराद्या ये प्रदर्शिताः ॥ ३९ ॥ पशवः कीटसंघाश्च तेऽपि
विष्णुमया नृप ॥ भावनां तु दृढां कुर्याद्यतः सर्वमयो हरिः ॥ ४० ॥ नान्यत्तत्सदृशं भूतमिति भावेन सेव्यताम् ॥ एष ते ज्ञानसद्भावस्तव
राजन्प्रकीर्तितः ॥ ४१ ॥ परिपूर्णेन भावेन स्मर नारायणं गुरुम् ॥ पूजोपहारैर्धूपैश्च ब्राह्मणानां च तर्पणैः ॥ ध्यानेन सुस्थिरेनाशु सुप्राप्यः
परमेश्वरः ॥ ४२ ॥ इति वराहपुराणे आदिकृतवृत्तान्ते नारायणस्य व्यापकत्ववर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ अथ कर्मजन्यमोक्षादिकम् ॥
अश्वशिरा उवाच ॥ भवन्तौ मम संदेहमेकं छेत्तुमिहार्हतः ॥ येन च्छिन्नेन जयेत मम संसारविच्युतिः ॥ १ ॥ एवमुक्तो नृपतिना तदा योगि
वरो मुनिः ॥ कपिलः प्राह धर्मात्मा राजानं यजतां वरम् ॥ २ ॥ कपिल उवाच ॥ कस्ते मनसि सन्देहो राजन् परमधार्मिक ॥ छिनद्मि
येन तच्छ्रुत्वा ब्रूहि यत्तेऽभिवाञ्छितम् ॥ ३ ॥ राजोवाच ॥ कर्मणा प्राप्यते मोक्ष उताहो ज्ञानिना मुने ॥ एतन्मे संशयं छिन्धि यदि
मेऽनुग्रहः कृतः ॥ ४ ॥ कपिल उवाच ॥ इमं प्रश्नं महाराज पुरा पृष्टो बृहस्पतिः ॥ रैभ्येण ब्रह्मपुत्रेण राज्ञा च वसुना तथा ॥ ५ ॥ वसुरासी

नृपश्रेष्ठो विद्वान्दानपतिः पुरा ॥ चाक्षुषस्य मनोः काले ब्रह्मणोऽन्वयवर्द्धनः ॥ ६ ॥ वसुः स ब्रह्मणः सद्म गतवांस्तद्दिदृक्षया ॥ पथि चैत्ररथ
दृष्ट्वा विद्याधरवरं नृप ॥ अपृच्छच्च वसुः प्रीत्या ब्रह्मणोऽवसरं प्रभो ॥ ७ ॥ सोऽब्रवीद्देवसमितिर्वर्तते ब्रह्मणो गृहे ॥ एवं श्रुत्वा वसुस्तस्थौ
द्वारि ब्रह्मलोकसस्तदा ॥ ८ ॥ तावत्तत्रैव रैभ्यस्तु आजगाम महातपाः ॥ स राजा प्रीतिमानासीद्वसुः सम्पूर्णमानसः ॥ ९ ॥ उवाच पूजयि
त्वाग्रे क्व प्रयातोऽसि वै मुने ॥ १० ॥ रैभ्य उवाच ॥ अहं बृहस्पतेः पार्श्वादागतोऽस्मि महानृप ॥ किञ्चित्कार्यान्तरं प्रष्टुमगाद्देवपुरोहि
तम् ॥ ११ ॥ एवं ब्रुवति रैभ्ये तु ब्रह्मणस्तन्महत्सदः ॥ उत्तस्थौ स्वानि धिष्ण्यानि गता देवगणाः प्रभो ॥ १२ ॥ तावद्बृहस्पतिस्तत्र
रैभ्येण सह संविदम् ॥ कृत्वा स्वधिष्ण्यमगमद्वसुना चानुपूजितः ॥ १३ ॥ रैभ्य आङ्गिरसो राजा वसुश्चोपविवेश ह ॥ उपविष्टेषु राजेन्द्र तेषु
त्रिष्वपि सोऽब्रवीत् ॥ १४ ॥ बृहस्पतिर्देवगुरू रैभ्यं वचनमन्तिके ॥ किं करोमि महाभाग वेदवेदाङ्गपारग ॥ १५ ॥ रैभ्य उवाच ॥ बृह
स्पते कर्मणा किं प्राप्यते ज्ञानिनाऽथवा ॥ मोक्ष एतन्ममाचक्ष्व पृच्छतः संशयं प्रभो ॥ १६ ॥ बृहस्पतिरुवाच ॥ यत्किंचित्कुरुते कर्म
पुरुषः साध्वसाधु वा ॥ सर्वं नारायणे न्यस्य कुर्वन्नपि न लिप्यते ॥ १७ ॥ श्रूयते च द्विजश्रेष्ठ संवादो विप्रलुब्धयोः ॥ आत्रेयो ब्राह्मणः कश्चि
द्वेदाभ्यासरतो मुनिः ॥ १८ ॥ तपस्यभिरतः प्रातः स्नायी त्रिषवणे रतः ॥ नाम्ना संयमनः पूर्वमेकस्मिन्दिवसे नदीम् ॥ धर्मारण्ये गतः
स्नातुं धन्यां भागीरथीं शुभाम् ॥ १९ ॥ तत्रासीनं महायूथं हरिणानां विचक्षणः ॥ लुब्धो निष्ठुरको नाम धनुःपाणिः कृतान्तवत् ॥
आययौ तं जिघांसुः सन्सज्यं संयुज्य सायकम् ॥ २० ॥ ततः संयमनो विप्रो दृष्ट्वा तं मृगघातरतम् ॥ वारयामास मा भद्र जीवघातमिमं कुरु ॥ २१ ॥
एतच्छ्रुत्वा वचो व्याधः स्मितपूर्वमिदं वचः ॥ उवाच नाहं हिंसामि पृथग्जीवान्द्विजोत्तम ॥ २२ ॥ परमात्मा त्वयं भूतैः क्रीडते भगवान्स्व
यम् ॥ कृता मायावली मन्त्रैस्तद्वदेतन्न संशयः ॥ २३ ॥ अहंभावः सदा ब्रह्मन्न विधेयो मुमुक्षुभिः ॥ प्राणयात्रारतं सर्वं जगदेतद्विचेष्टितं ॥
तत्राहमिति यः शब्दः स साधुत्वं न गच्छति ॥ २४ ॥ इत्याकर्ण्य स विप्रेन्द्रो द्विजः संयमनस्तदा ॥ विस्मयेनाब्रवीद्वाक्यं लुब्धं निष्ठुरकं
द्विजः ॥ २५ ॥ किमेतदुच्यते भद्र प्रत्यक्षं हेतुमद्वचः ॥ २६ ॥ ततः श्रुत्वा पुनर्विप्रं लुब्धकः प्राह धर्मवित् ॥ कृत्वा लोहमयं जालं तस्याधो

ज्वलनं ददौ ॥ २७ ॥ दत्तवह्निं द्विजं प्राह ज्वालयतां काष्ठसंचयः ॥ ततो विप्रो मुखेनाग्निं प्रज्वाल्य विरराम ह ॥ २८ ॥ ज्वलिते तु पुनर्वह्नौ तं जालं लोहसंभवम् ॥ गवाक्षैर्निर्गतज्वालं बभौ कादंबगोलवत् ॥ २९ ॥ पृथक्पृथक्सहस्राणि निश्चेरुर्ज्वलनार्चिषः ॥ एकस्थानगतस्यापि वह्नेरायसजालकैः॥३०॥ ततो लुब्धोऽब्रवीद्विप्रमेकां ज्वालां महामुने ॥ गृहाण येन शेषाणां करिष्यामीह नाशनम् ॥ ३१ ॥ एवमुक्त्वा हुताशे तु तोयपूर्णघटं द्रुतम् ॥ चिक्षेप सहसा वह्निः प्रशशामाथ पूर्ववत् ॥ ३२ ॥ ततोऽब्रवील्लुब्धकस्तु ब्राह्मणं तं तपोधनम् ॥ भगवन्या त्वया ज्वाला गृहीतास्माद्धुताशनात् ॥ प्रयच्छ येन मार्गेण मांसान्यानाय्य भक्षये ॥ ३३ ॥ एवमुक्तस्तदा विप्रो यावदायसजालकम् ॥ पश्यत्येव न तत्राग्निर्मूलनाशे गतः क्षयम् ॥ ३४॥ ततो विलक्ष्यभावेन ब्राह्मणः शंसितव्रतः ॥ तूष्णींभूतः स्थितस्तावल्लुब्धको वाक्यमब्रवीत् ॥ ३५ ॥ एतस्मिंज्ज्वलितो वह्निर्बहुशाखश्च सत्तम ॥ मूलनाशे भवेन्नाशस्तद्वदेतदपि द्विज ॥ ३६ ॥ आत्मा स प्रकृतिस्थश्च भूतानां संश्रयो भवेत् ॥ विकृतस्तद्भवस्तस्य एषा वै जगतः स्थितिः॥ ३७॥पिण्डग्रहणधर्मेण यदस्य विहितं व्रतम् ॥ततश्शतानि संयोज्य कुर्वाणो नावसीदति॥ ३८॥ एवमुक्ते तु व्याधेन ब्राह्मणो राजसत्तम ॥ पुष्पवृष्टिरथाकाशात्तस्योपरि पपात ह ॥ ३९ ॥ विमानानि च दिव्यानि कामगानि महान्ति च ॥ बहुरत्नानि मुख्यानि ददृशे ब्राह्मणोत्तमः ॥ ४० ॥ तेषु नि॰रुक्तं लुब्धं सर्वेषु समवस्थितम् ॥ ददृशे ब्राह्मणस्तत्र कामरूपिणमुत्तमम् ॥४१ ॥ अद्वैतवासनासिद्धं योगाद्बहुशरीरकम् ॥ दृष्ट्वा विप्रो मुदा युक्तः प्रययौ निजमाश्रमम् ॥ ४२ ॥ एवं ज्ञानं भवेत्कर्म कुर्वतोऽपि स्वजातिकम् ॥ भवेन्मुक्तिर्द्विजश्रेष्ठ रैभ्य राजन्वसो ध्रुवम्॥४३॥एवं तौ संशयच्छेदं प्राप्तौ रैभ्यवसू नृप॥ बृहस्पतेस्तनो धिष्ण्याज्जग्मतुर्निजमाश्रमम्॥४४॥ तस्मात्त्वमपि राजेन्द्र देवं नारायणं प्रभुम् ॥ अभेदेन स्वदेहे तु पश्य त्वाराधयन् प्रभुम् ॥ ४५ ॥ कपिलस्यैवं वचः श्रुत्वा स राजाश्वशिरा विभुः ॥ ज्येष्ठं पुत्रं समाहूय धन्यं स्थूलशिराह्वयम् ॥ अभिषिच्य निजे राज्ये स राजा प्रययौ वनम् ॥ ४६ ॥ नैमिषारण्यं वराहे तत्र यज्ञतनुं हरिम् ॥ तपसाराधयामास यज्ञमूर्तिं स्तवेन च ॥४७॥ धरण्युवाच॥कथं यज्ञतनोः स्तोत्रं राज्ञा नारायणस्य ह॥स्तुतिः कृता महाभाग पुनरेतच्च शंस मे ॥ ४८ ॥ वराह उवाच ॥ नमामि नित्यं त्रिदशाधिपस्य भवस्य सूर्यस्य हुताशनस्य ॥ सोमस्य राज्ञो मरुतामनेकरूपं

हरिं यज्ञतनुं नमस्ते॥ ४९॥ सुभीमदंष्ट्रं शशिसूर्यनेत्रं संवत्सरव्यायनयुग्मकुक्षिम् ॥ दर्भाङ्कुरोमाणमथोग्रशक्तिं सनातनं यज्ञनरं नमामि ॥५०॥
द्यावापृथिव्योरिदमन्तरं हि व्याप्तं शरीरेण दिशश्च सर्वाः॥ तमीड्यमीशं जगतां प्रसूतिं जनार्दनं तं प्रणतोऽस्मि नित्यम् ॥५१॥ सुरासुराणामजयो
जयाय युगेयुगे यत्स्वशरीरमाद्यम् ॥ सृजत्यनादिः परमेश्वरो यस्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ॥ ५२ ॥ दधार मायामयमुग्रतेजा जयाय चक्र
त्वमलं सुशुभ्रम् ॥ सारङ्गशङ्खादिचतुर्भुजो यस्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ॥ ५३ ॥ क्वचित्सहस्रं शिरसां दधानः क्वचिन्महापर्वततुल्य
कायः ॥ क्वचित्स एव त्रसरेणुतुल्यो यस्तं सदा यज्ञनरं नमामि ॥५४॥ चतुर्मुखो यः सृजते समग्रं रथाङ्गपाणिः प्रतिपालनाय ॥ क्षयाय कालाः
नलसन्निभो यस्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ॥५५॥ संसारचक्रक्रमणक्रियायै यं इज्यते सर्वगतः पुराणः ॥ यो योगिनां ध्यानगतोऽप्रमेय
स्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ॥ ५६ ॥ सम्यङ्मनस्यर्पितवानहं ते यदा सुदृश्यं स्वतनौ तु तत्त्वम् ॥ न चान्यदस्तीति मतिः स्थिरा
मे यतस्ततो याति विशुद्धभावम् ॥ ५७ ॥ इतीरितस्तस्य हुताशनार्चिःप्रख्यं तु तेजः पुरतो बभूव ॥ तस्मिन्स राजा प्रविवेश बुद्धिं कृत्वा लयं
प्राप्तवान्यज्ञमूर्तौ ॥ ५८ ॥ इति वराहपुराणे आदिकृतवृत्तान्ते रैभ्यवसुचरिते कर्मजमोक्षनारायणस्तोत्रयोर्निरूपणं नाम पंचमोऽध्यायः ॥ ५ ॥
अथ पुण्डरीकाक्षपारस्तोत्रम् ॥ धरण्युवाच ॥ स वसुः संशयच्छेदं प्राप्य रैभ्यश्च सत्तपः ॥ उभौ किं चक्रतुर्देव श्रुत्वा चाङ्गिरसं वचः ॥ १ ॥
वराह उवाच ॥ स वसुः सर्वधर्मज्ञः स्वराज्यं प्रत्यपालयत् ॥ अयजद्बहुभिर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ २ ॥ कर्मकाण्डेन देवेशं हरिं नारायण
प्रभुम् ॥ तोषयामास राजेन्द्रस्तमभेदेन चिन्तयन् ॥ ३ ॥ ततः कालेन महता तस्य राज्ञो मतिः किल ॥ निवृत्तराज्यभोगेच्छाद्वन्द्वस्यान्त
मुपेयुषः ॥ ४ ॥ ततः पुत्रं विवस्वन्तं श्रेष्ठं भ्रातृशतस्य ह ॥ अभिषिच्य स्वके राज्ये तपोवनमुपागतः ॥ ५ ॥ पुष्करं नाम तीर्थानां प्रवरं
यत्र केशवः ॥ पुण्डरीकाक्षनामा तु पूज्यते तत्परायणैः ॥ ६ ॥ तत्र गत्वा स राजर्षिः काश्मीराधिपतिर्वसुः ॥ अतितीव्रेण तपसा स्वशरीर ॥ ६ ॥
मशोषयत् ॥ ७ ॥ पुण्डरीकाक्षपारं तु स्तवं भक्त्या जपन् बुधः ॥ आरिराधयिषुर्देवं नारायणमकल्मषम् ॥ स्तोत्रान्ते तद्वयं प्रातः स राजा
राजसत्तमः ॥ ८ ॥ धरण्युवाच ॥ पुण्डरीकाक्षपारं तु स्तोत्रं देव कथं स्मृतम् ॥ कीदृशं तन्ममाचक्ष्व परमेश्वर तत्त्वतः ॥ ९ ॥ वराह

उवाच ॥ नमस्ते पुण्डरीकाक्ष नमस्ते मधुसूदन ॥ नमस्ते सर्वलोकेश नमस्ते तिग्मचक्रिणे ॥ १० ॥ विश्वमूर्त्तिं महाबाहुं वरदं सर्वतेजसम् ॥
नमामि पुण्डरीकाक्षं विद्याविद्यात्मकं विभुम् ॥ ११ ॥ आदिदेवं महादेवं वेदवेदाङ्गपारगम् ॥ गंभीरं सर्वदेवानां नमस्ये वारिजेक्षणम् ॥ १२ ॥
सहस्रशीर्षिणं देवं सहस्राक्ष महाभुजम् ॥ जगत्संव्याप्य तिष्ठन्तं नमस्ये परमेश्वरम् ॥ १३ ॥ शरण्यं शरणं देवं विष्णुं जिष्णुं सनात
नम् ॥ नीलमेघप्रतीकाशं नमस्ये चक्रपाणिनम् ॥ १४ ॥ शुद्धं सर्वगतं नित्यं व्योमरूपं सनातनम् ॥ भावाभावविनिर्मुक्तं नमस्ये सर्वगं
हरिम् ॥ १५ ॥ नान्यत्किंचित्प्रपश्यामि व्यतिरिक्तं त्वयाऽच्युत ॥ त्वन्मयं च प्रपश्यामि सर्वमेतच्चराचरम् ॥ १६ ॥ एवं तु वदतस्तस्य मूर्त्ति
मान्पुरुषः किल ॥ निर्गत्य देहान्नीलाभो घनचण्डो भयङ्करः ॥ १७ ॥ रक्ताक्षो ह्रस्वकायस्तु दग्धस्थूणासमप्रभः ॥ उवाच प्राञ्जलिर्भूत्वा
किं करोमि नराधिप ॥ १८ ॥ राजोवाच ॥ कोऽसि किं कार्यमिह ते कस्मादागतवानसि ॥ एतन्मे कथय व्याध एतदिच्छामि वेदितुम् ॥ १९ ॥
व्याध उवाच ॥ पूर्वं कलियुगे राजंस्त्वं राजा दक्षिणापथे ॥ पूर्णधर्मोद्भवः श्रीमाञ्जनस्थाने विचक्षणः ॥ २० ॥ स कदाचिद्वराञ्वीर तुरगैः
परिवारितः ॥ अरण्यमागतो हन्तुं श्वापदानि विशेषतः ॥ २१ ॥ तत्र त्वया त्वकामेन मृगवेषधरो मुनिः ॥ दण्डयुग्मेन दूरे तु पातितो धरणी
तले ॥ २२ ॥ सद्यो मृतश्च विप्रेन्द्रस्त्वं च राजन्मुदा युतः ॥ हरिणोऽयं हत इति यावत्पश्यसि पार्थिव ॥ तावन्मृगवपुर्विप्रो मृतः प्रस्र
वणे गिरौ ॥ २३ ॥ तं दृष्ट्वा त्वं महाराज क्षुभितेन्द्रियमानसः ॥ गृहागतस्ततोऽन्यस्य कस्याचित्कथितं त्वया ॥ २४ ॥ ततः कतिपयाहस्य त्वया
रात्रौ नरेश्वर ॥ ब्रह्महत्याभयाद्भीतचित्तेनैतद्विचिन्तितम् ॥ कृत्यं करोमि शान्त्यर्थं मुच्येयं येन पातकात् ॥ २५ ॥ ततस्त्वया महाराज
सकृन्नारायणं प्रभुम् ॥ संचिन्त्य द्वादशी शुद्धा त्वया राजन्नुपोषिता ॥ २६ ॥ नारायणो मे सुप्रीत इति प्रोक्त्वा शुभेऽहनि ॥ गौर्दत्ता विधिना सद्यो
मृतोऽस्युदरशूलतः ॥ २७ ॥ अमुको द्वादशीधर्म्मो यत्तत्रापि च कारणम् ॥ कथयामि भवत्पत्नी नाम्ना नारायणी शुभा ॥ २८ ॥ सा कण्ठगेन
प्राणेन व्याहृता तेन ते गतिः ॥ २९ ॥ कल्पमेकं महाराज जातो विष्णुपुरे तव ॥ अहं च तव देहस्थः सर्वं जानामि चाक्षयम् ॥ ३० ॥
ब्रह्मग्रहो महाघोरः पीडयामीति मे मतिः ॥ तावद्विष्णोस्तु पुरुषैः किङ्करैर्मुसलैरहम् ॥ ३१ ॥ प्रहतः सङ्क्षयं यातश्च्युतस्ते रोम

कूपतः ॥ स्वर्गस्थस्यापि राजेन्द्र स्थितोऽहं स्वेन तेजसा ॥३२॥ ततोऽहःकल्पे निवृत्ते रात्रिकल्पेन सत्तम ॥ इदानीमादिसृष्टौ तु कृते नृपति
सत्तम ॥ सम्भूतस्त्वं महाराज राज्ञः सुमनसो गृहे ॥३३॥ काश्मीरदेशाधिपतेरहं चाङ्गरुहेस्तव ॥ यज्ञैरिष्टं त्वयानेकैर्बहुभिश्चाप्तदक्षिणैः ॥ ३४॥
न चाहं तैरपहृतो विष्णुस्मरणवर्ज्जितैः ॥ इदानीं यत्त्वया स्तोत्रं पुण्डरीकाक्षपारगम् ॥ ३५ ॥ पठितं तत्प्रभावेण विहायाङ्गरुहाण्यहम् ॥
एकीभूतः पुनर्जातो व्याधरूपी नृपोत्तम ॥ ३६ ॥ अहं भगवतः स्तोत्रं श्रुत्वा प्राक्पापमूर्त्तिना ॥ मुक्तोऽस्मि धर्मबुद्धिर्मे वर्त्तते साम्प्रतं
विभो ॥ ३७ ॥ एतच्छ्रुत्वा वचो राजा परं विस्मयमागतः ॥ वरेण छन्दयामास तं व्याधं राजसत्तमः ॥ ३८ ॥ राजोवाच ॥ स्मारितोऽस्मि
यथा व्याध त्वया जन्मान्तरंगतम् ॥ तथा त्वं मत्प्रभावेण धर्मव्याधो भविष्यति ॥ ३९ ॥ यश्चैतत्पुण्डरीकाक्षपारगं शृणुयात्परम् ॥
तस्य पुष्करयात्रायां विधिस्नानफलं भवेत् ॥ ४० ॥ वराह उवाच ॥ एवमुक्त्वा ततो राजा विमानवरमास्थितः ॥ परेण तेजसा योगमवापा
शेषधारिणि ॥ ४१ ॥ इति वराहपुराणे आदिकृतवृत्तान्ते वसुचरिते वसोः पुण्डरीकाक्षपारस्तोत्रेण मोक्षप्राप्तिर्नाम षष्ठोऽध्यायः ॥ ६ ॥ वसु
चरितं समाप्तम् ॥ अथ तपोगदाधरस्तोत्राभ्यामुत्तमलोकप्राप्तिः ॥ धरण्युवाच ॥ रैभ्योऽसौ मुनिशार्दूल श्रुत्वा सिद्धं वसुं तदा ॥ स्वयं किमकरो
देव संशयो मे महानयम् ॥१॥ वराह उवाच ॥ स रैभ्यो मुनिशार्दूल श्रुत्वा सिद्धं वसुं तदा ॥ आजगाम गयां पुण्यां पितृतीर्थं तपोधनः ॥२॥
तत्र गत्वा पितॄन्भक्त्या पिण्डदानेन तर्पयन् ॥ ततापं सुमहत्तीव्रं तपः परमदुश्चरम् ॥ ३ ॥ चरतस्तस्य तत्तीव्रं तपो रैभ्यस्य धीमतः ॥
आजगाम महायोगी विमानस्थोऽतिदीप्तिमान् ॥ ४ ॥ त्रसरेणुसमे शुद्धे विमाने सूर्यसन्निभे ॥ परमाणुप्रमाणेन पुरुषस्तत्र दीप्तिमान् ॥ ५ ॥
सोऽब्रवीद्रैभ्य किं कार्यं तपश्चरसि सुव्रत ॥ एवमुक्त्वा दिवो भूमेरन्तरास च वै पुमान् ॥ ६ ॥ तत्रापि रोदसीव्याप्तं विमानं सूर्यसन्निभम् ॥
युगपद्विष्णुभवनं व्याप्नुवन्तं ददर्श सः ॥ ७ ॥ ततः स विस्मयाविष्टो रैभ्यः प्रणतिपूर्वकम् ॥ पप्रच्छ तं महायोगिन् को भवान्प्रब्रवीतु
मे ॥ ८ ॥ पुरुष उवाच ॥ अहं रुद्रादवरजो ब्रह्मणो मानसः सुतः ॥ नाम्ना सनत्कुमारेति जनोलोके वसाम्यहम् ॥ ९ ॥ भवतः पार्श्वमायातः
प्रणयेन तपोधन ॥ धन्योऽसि सर्वदा वत्स ब्रह्मणः कुलवर्द्धनः ॥ १० ॥ रैभ्य उवाच ॥ नमोस्तु ते योगिवर प्रसीद दयां मह्यं कुरुषे विश्व

रूप ॥ किमत्र कृत्यं वद योगिसिंह धन्योऽहमुक्तो हि कथं त्वयाद्य ॥ ११ ॥ सनत्कुमार उवाच ॥ धन्यस्त्वमेव द्विजवर्यमुख्य यद्वेदवादाभि
रतः पितॄंश्च ॥ प्रीणासि मन्त्रव्रतजप्यहोमैर्गयां समासाद्य च सर्वपिण्डैः ॥ १२॥ शृणुष्व चान्यो नृपतिर्बभूव विशालनामा स पुरं विशालम् ॥
उवास धन्यो धृतिमान्सपुत्रः स्वयं विशालाधिपतिर्द्विजाग्र्यान् ॥ १३ ॥ पप्रच्छ पुत्रार्थममित्रहा स ते ब्राह्मणाः प्रोचुरदनिसत्त्वाः ॥ राजन्
पितॄंस्तर्पय पुत्रहेतोर्गत्वा गयामन्नदानैरनेकैः ॥ १४ ॥ ध्रुवं सुतस्ते भविता नृपेश सुसम्प्रदाता सकलक्षितीशः ॥ १५ ॥ इतीरिते ब्राह्मणैः स
प्रहृष्टो राजा विशालाधिपतिः प्रयत्नात् ॥ आगत्य तेन प्रवरेण तीर्थे मघासु भक्त्याथ कृतं पितॄणाम् ॥ १६ ॥ पिण्डप्रदानं विधिना प्रयत्ना
त्तावद्वियत्युत्तममूर्त्तिकांश्चीन् ॥ पश्यन् स पुंसः सितपीतकृष्णानुवाच राजा किमिदं भवाद्भिः ॥ उपेक्ष्यते शंसत सर्वमेव कौतूहलं मे मनसि
प्रवृत्तम् ॥ १७ ॥ सित उवाच ॥ अहं सितस्ते जनकोस्मि तात नाम्ना च वृत्तेन कुलेन कर्मणा ॥ अयं च मे जनको रक्तवर्णो नृशंसकृद्ब्रह्महा
पापकारी ॥ १८ ॥ अधीश्वरो नाम परः पिताऽस्य कृष्णो वृत्त्या कर्मणा चापि कृष्णः ॥ एतेन कृष्णेन हताः पुरा वै जन्मन्यनेके ऋषयः
पुराणाः ॥१९॥ एतौ मृतौ द्वावपि पुत्र रौद्रमवीचिसंज्ञं नरकं प्रपन्नौ ॥ अधीश्वरो मे जनकः परोऽस्य कृष्णः पिता द्वावपि दीर्घकालम् ॥२०॥
अहं च शुद्धेन निजेन कर्मणा शक्रासनं प्रापितो दुर्लभं त त्॥ त्वया पुनर्मन्त्रविदा गयायां पिण्डप्रदानेन बलादिमौ च ॥ संयोजितौ तीर्थपिण्ड
प्रदानप्रभावतो यौ नरकाश्रितावपि ॥ २१ ॥ पितॄन् पित ामहांस्तत्र तथैव प्रपितामहान् ॥ प्रीणयामीति तत्तोयं त्वया दत्तमरिन्दम ॥ २२ ॥
तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम॥तीर्थप्रभावाद्गच्छामि पितृलोकं न संशयः॥२३॥अत्र पिण्डप्रदानेन एतौ तव पितामहौ॥दुर्गतावपि
संसिद्धौ पापकृद्विकृतिङ्गतौ ॥२४॥ तीर्थप्रभाव एषोऽस्ति मन्त्रब्रह्मग्रस्यापि तत्सुतः ॥ पितुः पिण्डप्रदानेन कुर्यादुद्धरणं पुनः ॥२५॥ एतस्मात्
कारणात्पुत्र अहमेतौ विगृह्य वै ॥ आगतोऽस्मि भवन्तं वै द्रष्टुं यास्यामि साम्प्रतम् ॥२६॥ एतस्मात्कारणाद्रैभ्य भवान्धन्यो मयोच्यते ॥
सकृद्गयाभिगमनं सकृत्पिण्डप्रदापनम् ॥२७॥दुर्लभं त्वं पुनर्नित्यमास्मिन्नेव व्यवस्थितः ॥ किमनु प्रोच्यते रैभ्य तव पुण्यमिदं प्रभो ॥२८॥
येन साक्षाद्गदापाणिर्दृष्टो नारायणः स्वयम् ॥ ततो गदाधरः साक्षादस्मिन्क्षेत्रे व्यवस्थितः ॥ अतोऽतिविख्याततमं तीर्थमेतद्द्विज।

त्तम ॥ २९ ॥ वराह उवाच ॥ एवमुक्त्वा महायोगी तत्रैवान्तरधीयत ॥ रैभ्योऽपि च गदापाणेर्हरेः स्तोत्रमथाकरोत् ॥ ३० ॥ रैभ्य उवाच ॥
गदाधरं विबुधजनैरभिष्टुतं धृतक्षमं क्षुधितजनार्त्तिनाशनम् ॥ शिवं विशालासुर सैन्यमर्द्दनं नमाम्यहं हृतसकलाशुभं स्मृतौ ॥ ३१ ॥ पुराण
 पूर्वं पुरुषं पुरुष्टुतं पुरातनं विमलमलं नृणां गतिम् ॥ त्रिविक्रमं हृतधरणिं बलोर्ज्जितं गदाधरं रहसि नमामि केशवम् ॥ ३२ ॥ विशुद्धभावं
विभवैरुपावृतं श्रियावृत्तं विगतमलं विचक्षणम् ॥ क्षितीश्वरैरपगतकिल्बिषैः स्तुतं गदाधरं प्रणमति यः सुखं वसेत् ॥ ३३ ॥ सुरासुरैरर्च्चित
पादपङ्कजं केयूरहाराङ्गदमौलिधारिणम् ॥ अब्धौ शयानं च रथाङ्गपाणिनं गदाधरं प्रणमति यः सुखं वसेत् ॥ ३४ ॥ सितं कृते त्रेतयुगेऽरुणं
विभुं तथा तृतीये नीलसुवर्णमच्युतम् ॥ कलौ युगेऽलिप्रतिमं महेश्वरं गदाधरं प्रणमति यः सुखं वसेत् ॥ ३५ ॥ बीजोद्भवो यः सृजते चतु
र्मुखं तथैव नारायणरूपतो जगत् ॥ प्रपालयेद्रुद्रवपुस्तथान्तकृद्गदाधरो जयतु षडर्द्धमूर्तिमान् ॥ ३६ ॥ सत्त्वं रजश्चैव तमो गुणास्त्रय
स्त्वेतेषु विश्वस्य समुद्भवः किल ॥ स चैक एव त्रिविधो गदाधरो दधातु धैर्यं मम धर्ममोक्षयोः ॥ ३७ ॥ संसारतोयार्णवदुःखतन्तुभिर्वियोग
नक्रक्रमणैःसुभीषणैः ॥ मज्जन्तमुच्चैः सुतरां महाप्लवो गदाधरो मामुदधौ तु योऽतरत् ॥ ३८ ॥ स्वयं त्रिमूर्त्तिः स्वामिवात्मनात्मनि स्वशक्तितश्चाण्ड
मिदं संसर्ज्ज ह ॥ तस्मिञ्जलोत्थासनमाप तैजसं ससर्ज्ज यस्तं प्रणतोऽस्मि भूधरम् ॥ ३९ ॥ मत्स्यादिनामानि जगत्सु चाश्नुते सुरादि
संरक्षणतो वृषाकपिः ॥ मखस्वरूपेण स सन्ततो विभुर्गदाधरो मे विदधातु सद्गतिम् ॥ ४० ॥ वराह उवाच ॥ एवं स्तुतस्तदा विष्णु
र्भक्त्या रैभ्येण धीमता ॥ प्रादुर्बभूव सहसा पीतवासा जनार्दनः ॥ ४१ ॥ शङ्खचक्रगदापाणिर्गरुडस्थो वियद्गतः ॥ उवाच मेघगम्भीर
धीरवाक्पुरुषोत्तमः ॥ ४२ ॥ तुष्टोऽस्मि रैभ्य भक्त्या ते स्तुत्या चापि द्विजोत्तम ॥ तीर्थस्नानेन च विभो ब्रूहि यत्तेऽभिवाञ्छितम् ॥ ४३ ॥ 
रैभ्य उवाच ॥ गतिं मे देहि देवेश यत्र ते सनकादयः ॥ वसेयं तत्र येनाहं त्वत्प्रसादाज्जनार्दन ॥ ४४ ॥ देव उवाच ॥ एवमस्त्विति ते
ब्रह्मन्नित्युक्त्वाऽन्तरधीयत ॥ भगवानपि रैभ्यस्तु दिव्यज्ञानसमन्वितः ॥ ४५ ॥ क्षणाद्बभूव देवेन परितुष्टेन चक्रिणा ॥ जगाम यत्र ते सिद्धाः
सनकाद्या महर्षयः ॥ ४६ ॥ एतच्च रैभ्यनिर्दिष्टं स्तोत्रं विष्णोर्गदाभृतः ॥ यः पठेत्स गयां गत्वा पिण्डदानाद्विशिष्यते ॥ ४७ ॥ इति वराह

पुराणे आदिकृतवृत्तान्ते रैभ्यस्य तपसा गदाधरस्तोत्रेण चोत्तमलोकप्राप्तिर्नाम सप्तमोऽध्यायः ॥ ७ ॥ इति रैभ्यचरितं समाप्तम् ॥ अथ धर्म व्याधचरितम् ॥ वराह उवाच ॥ योऽसौ वसोः शरीरे तु व्याधो भूत्वा नृपस्य ह ॥ स स्ववृत्त्या स्थितः कालं चतुर्वर्षसहस्रकम् ॥ १ ॥ एकैकं स्वकुटुम्बार्थं हत्वा वनचरं मृगम् ॥ भृत्यातिथिहुताशानां प्रीणनं कुरुते सदा ॥ २ ॥ मिथिलायां वरारोहे सदा पर्वणिपर्वणि ॥ पितॄणां कुरुते श्राद्धं स्वाचारेण विचक्षणः ॥ ३ ॥ अग्निं परिचरन्नित्यं वदन् सत्यं सुभाषितम् ॥ प्राणयात्रानुपकस्तु योऽसौ जीवं न पातयेत् ॥ ४ ॥ एवं तु वसतस्तस्य धर्मबुद्धिर्म्महातपाः ॥ पुत्रस्त्वर्ज्जुनको नाम बभूव मुनिवद्वशी ॥ ५ ॥ तस्य कालेन महता चारित्रेण च धीमतः ॥ बभूवार्ज्जुनका नाम कन्या च वरवर्णिनी ॥ ६ ॥ तस्या यौवनकाले तु चिन्तयामास धर्मवित् ॥ कस्येयं दीयते कन्या को वा योग्यश्च वै पुमान् ॥७॥ इति चिन्तयतस्तस्य मतङ्गस्य सुतं प्रति ॥ धर्मव्याधस्य सुव्यक्तं प्रसन्नाख्यं प्रतिब्रुवन् ॥ ८ ॥ एवं संचिन्त्य मातङ्गः प्रसन्नं प्रति सोद्यतः ॥ उवाच तस्य पितरं प्रसन्नायार्ज्जुनीं भवान् ॥ गृहाण तपतां श्रेष्ठ स्वयन्दत्तां महात्मने ॥ ९ ॥ मतङ्ग उवाच ॥ प्रसन्नोऽयं मम सुतः सर्वशास्त्र विशारदः ॥ गृह्णाम्यर्ज्जुनकां कन्यां त्वत्सुतां व्याधसत्तम ॥ १० ॥ एवमुक्ते तदा कन्यां धर्मव्याधो महातपाः ॥ मतङ्गपुत्राय ददौ प्रसन्नाय च धीमते ॥ ११ ॥ धर्म्मव्याधस्तदा कन्यां दत्त्वा स्वगृहमीयिवान् ॥ सापि श्वशुरयोर्भर्त्तुः शुश्रूषणपराभवत् ॥ १२ ॥ अथ कालेन महता सा कन्याऽर्ज्जुनकाऽशुभा ॥ उक्ता श्वश्र्वा सुता पुत्री जीवहन्तुस्त्वमीदृशी ॥ न जानासि तपः कर्त्तुं भर्त्तुराराधनं तथा ॥ १३ ॥ साऽपि स्वल्पापराधेन भर्त्सिता तनुमध्यमा ॥ पितुर्वेश्मागता बाला रोदमाना मुहुर्मुहुः ॥ १४ ॥ पित्रा पृष्टा किमेतत्ते पुत्रि रोदनकारणम् ॥ एव मुक्ता तदा सा तु कथयामास भामिनी ॥ १५ ॥ श्वश्र्वाऽहमुक्ता तीव्रेण कोपेन महता पितः ॥ जीवहन्तुः सुतेत्युच्चैरसकृद्व्याधजेति च ॥ १६ ॥ एवच्छ्रुत्वा स धर्मात्मा धर्मव्याधो रुषान्वितः ॥ मतङ्गस्य गृहं सोऽथ गत्वा जनपदैर्वृतम् ॥ १७ ॥ तस्यागतस्य सम्बन्धी मतङ्गो जयतां वरः ॥ आसनाद्यार्घ्यपाद्येन पूजयित्वेदमब्रवीत् ॥ १८ ॥ किमागमनकृत्यं ते किं करोम्यागतक्रियाम् ॥ १९ ॥ व्याध उवाच ॥ भोजनं किंचिदिच्छामि भोक्तुं चैतन्यवर्जितम् ॥ कौतूहलेन येनाऽहमागतो भवतो गृहे ॥ २० ॥ मतङ्ग उवाच ॥ गोधूमा व्रीहयश्चैव संस्कृता मम वेश्मनि ॥ भुज्यतां

धर्मविच्छ्रेष्ठ यथाकामं तपोधन ॥ २१ ॥ व्याध उवाच ॥ पश्यामि कीदृशास्ते हि गोधूमा व्रीहयो यवाः ॥ स्वरूपेण च सन्त्येते येन वो वेद्मि
सत्तम ॥ २२ ॥ वराह उवाच ॥ एवमुक्ते मतङ्गेन शूर्पं गोधूमपूरितम् ॥ अपरं तत्र व्रीहीणां धर्मव्याधाय दर्शितम् ॥ २३ ॥ दृष्ट्वा व्रीहीन् स
गोधूमान्धर्मव्याधो वरासनात् ॥ उत्थाय गन्तुमारेभे मतङ्गेन निवारितः ॥२४॥ किमर्थं गन्तुमारब्धं त्वया वद महामते ॥ अभुक्त्वैव संसिद्धं
मद्गृहे चान्नमुत्तमम् ॥ पाचयित्वा स्वयं चैव कस्मात्त्वं नाद्य भुञ्जति ॥ २५ ॥ व्याध उवाच ॥ सहस्रशः कोटिशश्च जीवान्हंसि दिने दिने ॥
अथेदृशस्य पापस्य कोऽन्नं भुञ्जति सत्पुमान् ॥२६ ॥ अचैतन्यं यदि गृहे विद्यतेऽन्नं सुसंस्कृतम् ॥ तदानीमस्मि संभोक्ता मत्वा तु स्वजनं
तव ॥ २७ ॥ अहमेकं कुटुम्बार्थे हन्म्यरण्ये पशुं दिने ॥ तं चेत्पितृभ्यः सत्कृत्य दत्त्वा भुञ्जामि साऽनुगः ॥ २८ ॥ त्वं तु जीवान्बहून्हत्वा
स्वकुटुम्बेन सानुगः ॥ भुञ्जसे तेन सततमभोज्यं तन्मतं मम ॥ २९ ॥ ब्रह्मणा तु पुरा सृष्टा ओषध्यः सर्ववीरुधः ॥ यज्ञार्थं तत्तु भूतानां
भक्ष्यमित्येव वै श्रुतिः ॥ ३० ॥ दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ॥ एते पंच महायज्ञा ब्रह्मणा निर्म्मिताः पुरा ॥ ३१ ॥
ब्राह्मणानां हितार्थाय इतरेषां च तन्मखाः॥ इतरेषां तु वर्णानां ब्राह्मणैः कारिताः शुभाः ॥३२॥ एवं कृत्वा नरो भुक्त्वा तस्माद्वान्नं विशुध्यति ॥
अन्यथा व्रीहयोऽप्येते एकैकं मृगपक्षिणः ॥ मन्तव्या दातृभोक्तॄणां महामांसं तु तत्स्मृतम् ॥ ३३ ॥ मया ते दुहिता दत्ता पुत्रार्थं वरवर्णिनी ॥
सा च त्वद्भार्यया प्रोक्ता दुहिता जन्तुघातिनः ॥ अतोऽर्थमागतोऽहं ते गृहं प्रति समीक्षितुम् ॥ ३४॥ आचारं देवपूजां च अतिथीनां च तर्प
णम् ॥ एतेषामेकमप्यत्र कुर्वन्नपि न दृश्यसे ॥ ३५ ॥ तदहं गन्तुमिच्छामि पितॄणां श्राद्धकाम्यया ॥ स्वगृहे नैव भुञ्जामि पितॄणां कार्य
मित्युत ॥ ३६ ॥ अहं व्याधो जीवघाती न तु त्वं लोकहिंसकः ॥ मत्सुता जीवघातस्य यदोढा त्वत्सुतेन च ॥३७॥ तन्महत्त्वं च सम्प्राप्तं
प्रायश्चित्तं तपोधन ॥ एवमुक्त्वा स चोत्थाय शप्त्वा नारीं तदाम्बरे ॥ ३८ ॥ मा स्नुषाभिः समं श्वश्र्वा विश्वासो भवतु क्वचित् ॥ मा च स्नुषा
कदाचित्स्याद्वा श्वश्रूं जीवतीमिषेत् ॥ ३९ ॥ एवमुक्त्वा गतो व्याधः स्वगृहं प्रति भामिनि ॥ ततो देवान्पितॄन्भक्त्या पूजयित्वा विच
क्षणः ॥ ४० ॥ पुत्रं चार्ज्जुनकं स्थाप्य स्वसन्तानं महातपाः ॥ धर्मव्याधो जगामाशु तीर्थं त्रैलोक्यविश्रुतम् ॥ ४१ ॥ पुरुषोत्तमसंज्ञं च

परं तत्र गत्वा समाहितः ॥ तपश्चचार नियमान्पठन्स्तोत्रमिदं धरे ॥४२॥ नमामि विष्णुं त्रिदशारिनाशनं विशालवक्षःस्थलसंश्रिताश्रियम् ॥
सुशासमं नीतिमतां पराङ्गतिं त्रिविक्रमं मन्दरधारिणं सदा ॥ ४३ ॥ दामोदरं निर्जितभूतलं धिया यशोंशुशुभ्रं भ्रमराङ्गसप्रभम् ॥ भवे भवं
दैत्यरिपुं पुरुष्टुतं नमामि विष्णुं शरणं जनार्दनम् ॥ ४४ ॥ त्रिधा स्थितं तिग्मरथाङ्गपाणिनं नयस्थितं युक्तमनुत्तमैर्गुणैः ॥ निःश्रेयसाख्यं
क्षयितेतरं गुरुं नमामि विष्णुं पुरुषोत्तमं त्वहम् ॥ ४५ ॥ महावराहो हविषां भुजो जनो जनार्दनो मे हितकृच्चतुर्मुखः ॥ महीधरो मामुदधिप्लुते
महान्स पातु विष्णुः शरणार्थिनं तु माम् ॥ ४६॥ मायाततं येन जगत्त्रयं कृतं यथाग्निनैकेन ततं चराचरम् ॥ चराचरस्य स्वयमेव सर्वतः स
मेऽस्तु विष्णुः शरणं जगत्पतिः ॥४७॥ भवे भवे यश्च ससर्ज्ज कं ततो जगत्प्रसूतं सचराचरं त्विदम् ॥ ततश्च रुद्रात्मवति प्रलीयते ततो
हरिर्विष्णुहरस्तथोच्यते ॥ ४८ ॥ खन्दुपृथ्व्यपिवनादिभास्करा जलं च यस्य प्रभवन्ति मूर्त्तयः ॥ स सर्वदा मे भगवान् सनातनो ददातु शं
विष्णुरचिन्त्यरूपधृक् ॥ ४९ ॥ इतीरिते तस्य सनातनः स्वयं पुरोबभूवाद्भुतरूपदर्शनः ॥ वरं वृणीष्वेति सनातनोऽब्रवीदनन्तपादोदरबाहु
वक्त्रः ॥ ५०॥ इतीरितो व्याधवरो जगाद प्रदीयतामेष वरः सुतेष्वपि ॥ क्रियाकलापेन तथात्मविद्यया कुलप्रसूतावपि तेऽनुगामिनः ॥५१॥
ज्ञानोदयस्त्वस्य कुलस्य सर्वदा लयस्तथा ब्रह्मणि मे सनातन ॥५२॥ इतीरिते तं भगवानुवाच ह प्रसन्नबुद्धिर्भवते मया त्वयम् ॥ वरो विसृ
ष्टश्च कुलस्य ते मया लयस्तथा ब्रह्मणि शाश्वते तव ॥ ५३ ॥ इतीरिते देववरेण तु क्षणात् स्वदेहतस्तेज उदीर्णमैक्षत ॥ ५४ ॥ विसर्जयामास
कविं सनातनं लयं च तत्र प्रतिपेदिवानसौ ॥ इतीरितं स्तोत्रवरं धरे नरः पठिष्यते यश्च शृणोति मानवः ॥ ५५ ॥ हरिं समभ्यर्च्य सदा
ह्युपोषितो विशेषतो विष्णुदिने च मानवः ॥ स याति यत्र स्वयमेव केशवो वसेत मन्वन्तरसन्ततिं सुखम् ॥५६॥ इति वराहपुराणे आदिकृत
वृत्तान्ते धर्म्मव्याधचरितं नामाष्टमोध्यायः ॥ ८ ॥ अथ मत्स्यावतारः ॥ धरण्युवाच ॥ आदौ कृतयुगे नाथ किं कृतं विश्वमूर्तिना ॥
नारायणेन तत्सर्वं श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥ वराह उवाच ॥ पूर्वं नारायणस्त्वेको नासीत्किञ्चिद्धरे परम् ॥ सैकः एव रतिं लेभे नैव
स्वच्छन्दकर्मकृत् ॥ २ ॥ तस्य द्वितीयमिच्छातश्चिन्ता बुद्ध्यात्मिका बभौ ॥ अभावेत्येव संज्ञा या क्षणं भास्करसन्निभा ॥ ३ ॥ तस्यापि

द्विविधा भूता चिन्ताभूद्ब्रह्मवादिनः ॥ उमेति संज्ञया यत्तत्सदा मर्त्ये व्यवस्थिता॥४॥ ओमित्येकाक्षरीभूता ससर्जेमां महीं न्तदा ॥ भूः ससर्ज भुवं स्वोऽपि ससर्ज च ततो महः ॥ ५ ॥ ततश्च जन इत्येव ततश्चात्मा प्रलीयते ॥ एतदोतं तथा प्रोतं सूत्रे मणिगणा इव ॥ ६ ॥ जगत् प्रणवतो भूतं शून्यमेतत्स्थितं तदा ॥ येयं मूर्तिर्भगवतः शङ्करः स स्वयं हरिः ॥७॥ शून्याँल्लोकानिमान्सृष्ट्वा सिसृक्षुर्मूर्त्तिमुत्तमाम् ॥ क्षोभ यित्वा मनोधाम तत्राकारः स्वमात्रतः ॥ स्थितस्तस्मिन्यदा क्षुब्धे ब्रह्माण्डमभवत्तदा ॥ ८ ॥ तस्मिंस्तु शकलीभूते भूर्लोकं च व्यव स्थितम् ॥ अपरं भुवनं प्रायान्मध्ये भास्करसन्निभम्॥९॥पुरा नवकसंस्थो यः पद्मकोशो व्यवस्थितः ॥ स हि नारायणो देवः प्राजापत्येन तेजसा ॥१०॥ अकाराद्यं स्वरं ताभ्यां हलं च विससर्ज ह ॥ अमूर्तसृष्टौ शास्त्राणि उदगायत्तदा हि सः॥११॥सृष्ट्वा पुनरमेयात्मा चिन्तयामास धारणम् ॥ तस्य चिन्तयतो नेत्रात्तेजः समभवन्महत् ॥ १२ ॥ दक्षिणं वह्निसङ्काशं वामं तुहिनसन्निभम् ॥ तद्दृष्ट्वा चन्द्रसूर्यौ तु कल्पितौ परमेष्ठिना ॥१३॥ ततः प्राणः समुत्तस्थौ वायुश्च परमेष्ठिनः ॥ स एव वायुर्भगवान्योऽद्यापि हृदि नो विभुः ॥१४॥ तस्माद्वह्निः समुत्तस्थौ तस्मादग्नेर्जलं महत् ॥ य एवाग्निः स वै तेजो ब्राह्मं परमकारणम् ॥१५॥ बाहुभ्यामप्यसौ तेजः क्षात्रं तेजः ससर्ज ह ॥ ऊरुभ्यामपि वैश्यांश्च पद्भ्यां शूद्रांस्तथा विभुः ॥ १६ ॥ ततस्तु ससृजे यक्षान्राक्षसांश्च तथा विभुः ॥ चतुर्विधैस्तु भूर्लोकं भुवो लोकं वियच्चरैः ॥ १७ ॥ भूतैः स्वमार्गगैरन्यैः स्वर्लोकं समपूरयत् ॥ महर्लोकं तथा तैस्तैर्भूतैश्च सनकादिभिः ॥ १८ ॥ जनोलोकं ततश्चैव वैराजैः समपूरयत् ॥ तपोलोकं ततो देवैस्तपोनिष्ठैरपूरयत् ॥ १९ ॥ अपुनर्मारकैर्देवैः सत्यलोकमपूरयत् ॥ सृष्टिं सृष्ट्वा तथा देवो भगवान्भूतभावनः ॥ कल्पसंज्ञां तदामोघां जगन्लि परमेश्वरः ॥ २० ॥ तस्मिन् जगति भूर्लोको भुवोलोकश्च जायते ॥ स्वर्लोकश्च त्रयोऽप्येते जायन्ते नात्र संशयः ॥ २१ ॥ सुप्ते तु देवे कल्पान्ते तावती रात्रिरिष्यते ॥ त्रैलोक्यमेतत्सुप्तं स्यात्तथोपप्लवताङ्गतम् ॥ २२ ॥ ततो रात्र्यां व्यतीतायामुत्थितः कमलेक्षणः ॥ चिन्तयामास तान्वेदान्मातरं च चतुर्ष्वपि॥ २३॥ चिंतयानः स देवेशस्तान्वेदान्नाध्यगच्छत ॥ लोकमार्गस्थितिं कर्तुं निद्राज्ञानेन मोहितः ॥ चिंतयामास देवेशो नात्र देवो व्यवस्थितः ॥ २४ ॥ ततः स्वमूर्तौ तोयाख्ये लीनान्दृष्ट्वा महेश्वरः ॥ जिघृक्षुश्चिन्तयामास मत्स्यो भूत्वाऽऽ

विशज्जलम्॥२५॥ एवं ध्यात्वा महामत्स्यस्तत्क्षणात्समजायत॥ विवेश च जलं देवः समन्तात्क्षोभयन्निव ॥२६॥ तस्मिन् प्रविष्टे सहसा जलं
तु महामहीध्रग्वपुषि प्रकाशम् ॥ मात्स्यं गते देववरे महोदधिं हरिं स्तवैस्तुष्टुवुरुद्धृतक्षितिम् ॥ २७ ॥ नमोऽस्तु वेदान्तरगाप्रतर्क्य नमोऽस्तु
नारायण मत्स्यरूप॥नमोऽस्तु ते सुस्वर विश्वमूर्ते नमोऽस्तु विद्याद्वयरूपधारिन् ॥२८॥ नमोस्तु चन्द्रार्क अनेकरूप जलान्तविश्वस्थित
चारुनेत्र॥नमोस्तु विष्णो शरणं व्रजामः प्रयाहि नो मत्स्यतनुं विहाय॥२९॥त्वया ततं विश्वमनन्तमूर्ते पृथङ्न ते किञ्चिदिहास्ति देव॥भवान्न
चास्य व्यतिरिक्तमूर्त्तिस्त्वत्तो वयं ते शरणं प्रपन्नाः ॥ ३० ॥ खात्मेन्दुवह्निश्च मनश्च रूपं पुराणमूर्त्तेस्तव चाब्जनेत्र ॥ क्षमस्व शंभो यदि
भक्तिहीनं त्वया जगद्भासति देवदेव ॥ ३१॥ विरुद्धमेतत्तव देवरूपं सुभाषणं सुस्वनमद्रितुल्यम् ॥ पुराण देवेश जगन्निवास शमं प्रयाह्यच्युत
तीव्रभानो ॥ ३२ ॥ नमाम सर्वे शरणं प्रपन्ना भयाच्च ते रूपमिदं च दृष्ट्वा ॥ लोके समस्तं भवता विनाऽद्य न विद्यते देहगतं पुराणम् ॥३३ ॥
एवं स्तुतस्तदा देवो जलस्थाज्जगृहे च सः ॥ वेदान्सोपनिषच्छास्त्राण्यतः स्वं रूपमास्थितः ॥३४॥ यावत्स्वमूर्त्तिर्भगवांस्तावदेव जगत्त्विदम्॥
कूटस्थे तल्लयं याति विकृतस्थे विवर्द्धते ॥ ३५ ॥ इति वराहपुराणे आदिकृतवृत्तान्ते सृष्टिवर्णने मत्स्यावतारतत्त्वनिरूपणंनाम नवमो
ध्यायः ॥ ९॥ अथ सृष्टिः ॥ वराह उवाच ॥ एवं सृष्ट्वा जगत्सर्वं भगवान्भूतभावनः ॥ विरराम ततः सृष्टिर्व्यवर्द्धत धरे तदा ॥१॥ वृद्धाया
मथ सृष्टौ तु सर्वे देवाः पुरातनम् ॥ नारायणाख्यं पुरुषं यजन्तो विविधैर्मखैः ॥ २ ॥ द्वीपेषु चैव सर्वेषु वर्षेषु च मखैर्हरिम् ॥ देवाः सत्रै
र्महद्भिस्ते यजन्तः श्रद्धयान्विताः ॥ ३ ॥ तोषयामासुरत्यर्थं स्वं पूज्यं कर्त्तुमीप्सवः ॥ एवं तोषयतां तेषां बहुवर्षसहस्रकः ॥ कालो देवस्तदा
तुष्टः प्रत्यक्षत्वं जगाम ह ॥ ४ ॥ अनेकबाहूदरवक्त्रनेत्रो महागिरेः शृङ्गमिवोल्लिखंस्तदा ॥ उवाच किं कार्यमथो सुरेशः प्रब्रूत तं देववरा वरं
वः ॥ ५ ॥ देवा ऊचुः ॥ जयस्व गोविन्द महानुभाव त्वया वरं नाथ वरेण देवाः ॥ मनुष्यलोकेऽपि भवन्तमाद्यं विहाय नास्मान्भवतेह
कश्चित् ॥ ६ ॥ चन्द्रादित्यौ वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ॥ सर्वे भवन्तं शरणागताः स्म कुरुष्व पूज्यानिह विश्व
मूर्त्ते ॥ ७॥ एवमुक्तस्तदा तैस्तु महायोगीश्वरो हरिः ॥ करोमि सर्वान्वः पूज्यानित्युक्त्वाऽन्तरधीयत ॥८॥ देवा अपि निजोकांसि गतवन्तः

सनातनाः ॥ स्तुवन्तः परमेशोऽपि त्रिविधं भावमास्थितः॥९॥ एवं त्रिधा जगद्धाता भूत्वा देवान्महेश्वरः ॥ आराध्य सात्त्विकं राजसतामसं च त्रिधा स्थितम् ॥ १० ॥ सात्त्विकेन पठेद्वेदान्यजन्यज्ञेन देवताः ॥ आत्मनोऽवयवो भूत्वा राजसेनापि केशवः ॥ ११ ॥ स कालरूपिणं रौद्रं प्रकृत्या शूलपाणिनम् ॥ आत्मनो राजसीं मूर्त्तिं पूजयामास भक्तितः ॥ १२ ॥ तामसेनापि भावेन असुरेषु व्यवस्थितः ॥ १३ ॥ एवं त्रिधा जगद्धाता भूत्वा देवान्महेश्वरः ॥ आराधयामास ततो लोकोऽपि त्रिविधोभवत् ॥१४ ॥ एवं विष्णुर्महेशानां नाम गृह्णन्व्यवस्थितः ॥ स च नारायणो देवः कृते युगवरे प्रभुः ॥१५॥ त्रेतायां रुद्ररूपस्तु द्वापरे यज्ञमूर्त्तिमान् ॥ कलौ नारायणो देवो बहुरूपो व्यजायत ॥ १६ ॥ तस्यादिकर्तुर्वै विष्णोश्चरितं भूरितेजसः ॥ शृणुष्व सर्वं सुश्रोणि गदतो मम भामिनि ॥ १७॥ असीत्कृतयुगे राजा सुप्रतीको महाबलः ॥ तस्य भार्याद्वयं चासीदतिविशिष्टं मनोरमम् ॥ १८ ॥ विद्युत्प्रभा कान्तिमती तयोरेते तु नामनी ॥ तयोः पुत्रं समं राजा न लेभे बलवानपि ॥१९॥ यदा तदा मुनिश्रेष्ठमात्रेयं वीतकल्मषम् ॥ तोषयामास विधिना चित्रकूटे नगोत्तमे ॥२०॥ स ऋषिस्तोषितस्तेन दीर्घकालं वरार्थिना ॥ वरं दित्सुतया यावदब्रवीदत्रिजो मुनिः ॥ २१ ॥ तावदिन्द्रोऽपि करिणा गतः पार्श्वेन तस्य ह ॥ देवसैन्यैः परिवृतस्तूष्णीमेव महाबलः ॥ २२ ॥ तं दृष्ट्वा तद्गतप्रीतिरप्रीतिं प्रीतवान्मुनिः ॥ चुकोप देवराजाय शापमुग्रं ससर्ज ह ॥२३॥ यस्मात्त्वया ममावज्ञा कृता मूढ दिवस्पते ॥ ततस्त्वं चालितो राज्यादन्यलोके वसिष्यसि ॥ २४ ॥ एवमुक्त्वाऽपि कोपेन सुप्रतीकं च भूपतिम् ॥ उवाच राजन्पुत्रस्ते भविता दृढविक्रमः ॥ २५ ॥ इन्द्ररूपोपमः श्रीमानुग्रच्छत्रः प्रतापवान् ॥ विद्याप्रभावतत्त्वज्ञः क्रूरकर्मा भविष्यति ॥ २६ ॥ दुर्जयोऽतिबली राजा एवमुक्त्वा गतो मुनिः ॥ सोऽपि राजा सुप्रतीको भार्यायां गर्भमावहत् ॥ २७ ॥ विद्युत्प्रभायां धर्मज्ञः साऽपि काले त्वसूयत ॥ तस्याः पुत्रः समभवद्दुर्जयाख्यो महाबलः ॥ २८ ॥ जातकर्मादिसंस्कारं तस्य चक्रे मुनिः स्वयम् ॥ तस्य चेष्टेर्बलेनासौ मुनेः सौम्यो बभूव ह ॥ २९ ॥ वेदशास्त्रार्थविद्यायां पारगो धर्मवान् शुचिः ॥ या द्वितीयाऽभवत्पत्नी तस्य राज्ञो महात्मनः ॥ ३० ॥ नाम्ना कान्तिमती धन्या तस्याः पुत्रो बभूव ह ॥ नाम्ना सुद्युम्न इत्येवं वेदवेदाङ्गपारगः ॥ ३१ ॥ अथ कालेन महता स राजा राजसत्तमः ॥

सुप्रतीकः सुतं दृष्ट्वा दुर्जयं योग्यमन्तिके॥ ३२॥ आत्मनो वृद्धभावं च वाराणस्यधिपो बली॥ चिन्तयामास राज्यार्थं दुर्जयं प्रति भामिनि॥ ३३ ॥
एवं संचिन्त्य धर्मात्मा तस्य राज्यं ददौ नृपः ॥ स्वयं च चित्रकूटाख्यं पर्वतं स जगाम ह ॥ ३४ ॥ दुर्जयोऽपि महद्राज्यं हस्त्यश्वरथ
वाजिभिः ॥ संयोज्य चिन्तयामास राज्यवृद्धिं प्रति प्रभुः ॥ ३५ ॥ एवं संचिन्त्य मेधावी हस्त्यश्वरथपत्तिभिः ॥ समेतां वाहिनीं कृत्वा उत्तरां
दिशमाश्रितः ॥ ३६ ॥ तस्य चोत्तरतो देशाः सर्वे सिद्धा महात्मनः ॥ भारताख्यमिदं वर्षं साधयित्वा सुदुर्जयः ॥ ३७ ॥ ततः किंपुरुषं
नाम वर्षं तेनापि साधितम् ॥ ततः परतरं चान्यद्धरिवर्षं जिगाय सः ॥ ३८॥ रम्यं रोमावतं वापि कुरुं भद्राश्वमेव च ॥ इलावृतं मेरुमध्यमेतत्सर्वं
जिगाय सः ॥ ३९ ॥ जित्वा जम्ब्वाख्यमेतद्धि द्वीपं यावदसौ नृपः ॥ जगाम देवराजानं जेतुं सर्वसुरान्वितम् ॥ ४० ॥ मेरुपर्वतमारुह्य देव
गन्धर्वदानवान् ॥ गुह्यकान्किन्नरान्दैत्यांस्ततो ब्रह्मसुतो मुनिः ॥ ४१ ॥ नारदो दुर्जयजयं देवराजाय शंसते ॥ तत इन्द्रस्त्वरायुक्तो लोकपालैः
समन्वितः ॥ ४२ ॥ जगाम दुर्जयं हन्तुं सोऽचिरेणात्रनिर्जितम् ॥ विहाय पर्वतं मेरुं मर्त्यलोकमिहागतः ॥ ४३ ॥ पूर्वदेशे च देवेन्द्रो लोक
पालैः समं प्रभुः ॥ स्थितवांस्तस्य सुमहच्चरितं सम्भविष्यति ॥ ४४ ॥ दुर्जयश्च सुराञ्जित्वा यावत्प्रतिनिवर्तते ॥ गन्धमादनपृष्ठे तु स्कन्धा
वारनिवेशनम् ॥ ४५ ॥ कृत्वाऽवस्थितसंभारमागतौ तापसौ तु तम् ॥ तावागतौ तथाऽब्रूतां राजन् दुर्जय लोकपाः ॥ निवारितास्त्वया सर्वे
लोकपालैर्विना जगत् ॥ ४६ ॥ न प्रवर्तेत्ततो देहि तत्परं सुखमुत्तमम् ॥ एवमुक्ते ततस्तौ तुं दुर्जयः प्राह धर्मवित् ॥४७॥ को भवन्ताविति
ततस्तावूचतुररिन्दमौ ॥ विद्युत्सुविद्युन्नामानावसुराविति नामतः ॥ ४८ ॥ तयोः सम्प्रति चेच्छामामो धर्मं सत्सु सुसंस्कृतम् ॥ लोकपानां
सर्वमावांकुर्मः कुर्वः सुदुर्जय ॥ ४९ ॥ एवमुक्ते दुर्जयेन तौ स्वर्गे सन्निवेशितौ ॥ लोकपालौ कृतौ सद्यस्ततोऽन्तर्द्धानमापतुः ॥ ५० ॥ तयो
रपि महत्कर्म चरितं च धराधरे ॥ भविष्यति महाराजो दुर्जयो मन्दरोपरि ॥ ५१ ॥ धनदस्य वनं दिव्यं दृष्ट्वा नन्दनसन्निभम् ॥ मुदा बभ्राम
रम्येऽस्मिन्स यावद्राजसत्तमः ॥ ५२ ॥ तावत्सुवर्णवृक्षाधः कन्याद्वयमपश्यत ॥ अतीव रूपसम्पन्नमतीवाद्भुतदर्शनम् ॥ ५३ ॥ दृष्ट्वा तु
विस्मयाविष्टः क इमे शुभलोचने॥ एवं संचिन्त्य यावत्स क्षणमेकं व्यवस्थितः॥५४॥तस्मिन्वने तावदुभौ तापसौ सोऽवलोकयत्॥ तौ दृष्ट्वा

 

सहसा राजा ययौ प्रीत्या परां मुदम् ॥ ५५॥ अवतीर्य द्विपात्तूर्णं नमश्चक्रे तयोः स्वयम् ॥ उपविष्टः स ताभ्यां तु कौशे दत्ते वरासने॥५६॥ पृष्टः कस्त्वं कुतश्चासि कस्य वा किमिह स्थितः ॥ तौ प्रहस्याब्रवीद्राजा सुप्रतीकेति विश्रुतः ॥ ५७ ॥ तस्य पुत्रः समुत्पन्नो दुर्जयो नाम नामतः ॥ पृथिव्यां सर्वराजानो जिगीषन्निह सत्तमौ ॥ ५८॥ आगतोऽस्मि ध्रुवं चैव स्मर्तव्योऽहं तपोधनौ ॥ भवन्तौ को समाख्यातं ममानु ग्रहकाङ्क्षया ॥ ५९ ॥ तापसावूचतुः ॥ आवां हेतृप्रहेत्राख्यौ मनोः स्वायंभुवः सुतौ ॥ आवां देवविनाशाय गतौ स्वो मेरुपर्वतम् ॥ ६० ॥ तत्रावयोर्महासैन्यं गजाश्वरथसङ्कुलम्॥जिगाय सर्वदेवानां शतशोऽथ सहस्रशः॥६१॥ते च देवा मदृत्सैन्यं दृष्ट्वा सैन्यं निपातितम्॥असुरैस्त्यक्तजीवित प्राणं ततस्ते शरणं गताः ॥ ६२ ॥ क्षीराब्धौ यत्र देवेशो हरिः शेते स्वयं प्रभुः ॥ तत्र विज्ञापयामासुः सर्वे प्रणतिपूर्वकम् ॥ ६३ ॥ देवदेव हरे सर्व सैन्यं त्वसुरसत्तमैः ॥ पराजितं परित्राहि भीतं विह्वललोचनम् ॥ ६४॥ त्वया देवासुरे युद्धे पूर्वं त्राताः स्म केशव॥सहस्रबाहोः क्रूरस्य समरे कालनेमिनः ॥ ६५ ॥ इदानीमपि देवेश असुरौ देवकण्टकौ ॥ हेतृप्रहेतृनामानौ बहुसैन्यपरिच्छदौ ॥६६॥ तौ हत्वा त्राहि नः सर्वान् देवदेव जगत्पते ॥ एवमुक्तस्ततो देवो विष्णुर्नारायणः प्रभुः ॥ ६७॥ अहं यास्यामि तौ हन्तुमित्युवाच जगत्पतिः ॥ एवमुक्तास्ततो देवा मेरुपर्वतसन्निधौ ॥ ६८ ॥ प्रतस्थुस्तेऽथ मनसा चिन्तयन्तो जनार्दनम् ॥ तैः संचिन्तितमात्रस्तु देवश्चक्रगदाधरः ॥६९॥आवयोः सैन्यमाविश्य एक एव महाबलः ॥ एकधा दशधात्मानं शतधा च सहस्रधा ॥ ७० ॥ लक्षधा कोटिधा कृत्वा स्वभूत्या च जगत्पतिः॥ एवं स्थिते देववरेऽस्मत्सैन्ये महाबलः ॥ ७१ ॥ यः कश्चिदसुरो राजन्नावयोर्बलमाश्रितः ॥ स हतः पतितो भूमौ दृश्यते गतचेतनः ॥ ७२ ॥ एवं तत्सहसा सैन्यं मायया विश्वमूर्तिना ॥ निहत्य मांसलकलं पत्तिध्वजसमाकुलम् ॥ ७३ ॥ चतुरङ्गं बलं सर्वं हत्वा देवो रथाङ्गभृत् ॥ आवां शेषावथो दृष्ट्वा गतोऽन्तर्द्धानमीश्वरः ॥ ७४॥ आवयोरीदृशं कर्म दृष्टं देवस्य शार्ङ्गिणः ॥ ततस्तमेव शरणं गतावाराधनाय वै ॥७५॥ त्वं चास्मन्मित्रतनयः सुप्रतीकात्मजो नृपः ॥ इमे च आवयोः कन्ये गृहाण मनुजेश्वर ॥ हेतृकन्या सुकेशी तु मिश्रकेशी प्रहेतृजा ॥ ७६ ॥ दुर्जयस्त्वेवमुक्तस्तु हेत्रा वै ते उभे शुभे ॥ कन्ये जग्राह धर्मेण भार्यार्थं मनुजेश्वरः ॥ ७७ ॥ ते लब्ध्वा सहसा राजा मुदा परमया युतः ॥ आज

गाम स्वकं राष्ट्रं निजसैन्यसमावृतः ॥ ७८ ॥ ततः कालेन महता तस्य पुत्रद्वयं बभौ ॥ सुकेश्याः प्रभवः पुत्रो मिश्रकेश्याः सुद
र्शनः ॥ ७९ ॥ स राजा दुर्जयः श्रीमाँल्लब्ध्वा पुत्रद्वयं शुभम् ॥ स्वयं कालान्तरे श्रीमाञ्जगामारण्यमान्तिके ॥ ८० ॥ तत्रस्थो वनजाञ्जन्तून्
बन्धयन्वै भयङ्करान् ॥ ददर्शारण्यमाश्रित्य मुनिं स्थितमकल्मषम् ॥ ८१ ॥ तपस्यन्तं महाभागं नाम्ना गौरमुखं शुभम् ॥ ऋषिवृन्दस्य
गोप्तारं त्रातारं पापिनां स्वयम् ॥ ८२ ॥ तस्याश्रमो विमलजलाविलो मरुत्सुगन्धिवृक्षप्रवरो द्विजन्मनः ॥ रराज जीमूत इवाम्बरान्मही
मुपागतः प्रवरविमानवद्गृहः ॥ ८३ ॥ ज्वलन्मुखाग्निप्रतिभासिताम्बरः सुशुद्धसंवासितवेशकुट्टकः ॥ शिष्यैः समुच्चारितसामनादकः
सुरूपयोषिन्मुनिकन्यकायुतः ॥ इतीदृशोऽस्यावसथो वराश्रमे सुपुष्पिताशेषतरुप्रसूनकः ॥ ८४ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते
सृष्टिवर्णने दुर्ज्जयचरिते दशमोऽध्यायः ॥ १० ॥ पुनर्दुर्जयचरितम् ॥ वराह उवाच ॥ ततस्तमीदृशं दृष्ट्वा तदा गौरमुखाश्रमम् ॥ दुर्ज्जय
श्चिन्तयामास रम्यमाश्रममण्डलम् ॥ १ ॥ प्रविशाम्यत्र पश्यामि ऋषीन्परमधार्मिकान् ॥ चिन्तयित्वा तदा राजा प्रविवेश तमाश्रमम् ॥ २ ॥
तस्य प्रविष्टस्य ततो राज्ञः परमहर्षितः ॥ चकार पूजां धर्मात्मा तदा गौरमुखो मुनिः ॥ ३ ॥ स्वागतादिक्रियाः कृत्वा कथान्ते तं महामुनिः ॥
स्वशक्त्याहं नृपश्रेष्ठ सानुगस्य तु भोजनम् ॥ करिष्यामि प्रमुच्यन्तां साधु वाहा इति द्विजः ॥ ४ ॥ एवमुक्त्वा स्थितस्तूष्णीं स मुनिः
शंसितव्रतः ॥ राजापि तस्थौ तद्भक्त्या स्वसहायैः समन्वितः ॥ ५ ॥ अक्षौहिण्यो बलस्यास्य पञ्चमात्रं तदा स्थिताः ॥ अयं च तापसः
किं मे दास्यते भोजनं त्विह ॥ ६ ॥ निमन्त्र्य दुर्ज्जयं विप्रस्तदा गौरमुखो नृपम् ॥ चिन्तयामास किं चास्य मया देयं तु भोजनम् ॥ ७ ॥ एवं
चिन्तयतस्तस्य महर्षेर्भावितात्मनः ॥ स्थितो मनसि देवेशो हरिर्नारायणः प्रभुः ॥ ८ ॥ ततः संस्मृत्य मनसा देवं नारायणं तदा ॥
तोषयामास गङ्गायां प्रविश्य मुनिसत्तमः ॥ ९ ॥ धरण्युवाच ॥ कथं गौरमुखो विष्णुं तोषयामास भूधर ॥ एतन्मे कौतुकं श्रोतुं सम्यगिच्छा
प्रवर्त्तते ॥ १० ॥ वराह उवाच ॥ नमोऽस्तु विष्णवे नित्यं नमस्ते पीतवाससे ॥ नमस्ते चाद्यरूपाय नमस्ते जलरूपिणे ॥ ११ ॥ नमस्ते
सर्वसंस्थाय नमस्ते जलशायिने ॥ नमस्ते क्षितिरूपाय नमस्ते तैजसात्मने ॥ १२ ॥ नमस्ते वायुरूपाय नमस्ते व्योमरूपिणे ॥ त्वं देवः सर्वभूतानां

प्रभुस्त्वमसि हृच्छयः ॥ १३ ॥ त्वमोङ्कारो वषट्कारः सर्वत्रैव च संस्थितः ॥ त्वमादिः सर्वदेवानां तव चादिर्न विद्यते ॥ १४ ॥ त्वं भूस्त्वं
त्व भुवो स्वस्त्वं जनस्त्वं च महः स्मृतः ॥ त्वं तपस्त्वं च सत्यं च त्वयि देव चराचरम् ॥१५॥ त्वत्तो भूतमिदं सर्वं विश्वं त्वत्तो ऋगादयः ॥
त्वत्तः शास्त्राणि जातानि त्वत्तो यज्ञाः प्रतिष्ठिताः ॥ १६ ॥ त्वत्तो वृक्षा वीरुधश्च त्वत्तः सर्वा वनौषधी ॥ पशवः पक्षिणः सर्पास्त्वत्त एव
जनार्दन ॥ १७ ॥ ममापि देवदेवेश राजा दुर्जयसंज्ञितः ॥ आगतोऽभ्यागतस्तस्य चातिथ्यं कर्त्तुमुत्सहे ॥ १८ ॥ तस्य मे निर्धनस्याद्य
देवदेव जगत्पते ॥ भक्तिनम्रस्य देवेश कुरुष्वान्नाद्यसञ्चयम् ॥ १९ ॥ यं यं स्पृशामि हस्तेन यं च पश्यामि चक्षुषा ॥ काष्ठं वा तृणकन्दं
वा तत्तदन्नं चतुर्विधम् ॥ २० ॥ तथा त्वन्यतमं वापि यद्ध्यातं मनसा मया ॥ तत्सर्वं सिद्ध्यतां मह्यं नमस्ते परमेश्वर ॥ २१ ॥ वराह
उवाच ॥ इति स्तुत्या तु देवेशस्तुतोष जगतां पतिः ॥ मुनेस्तस्य स्वकं रूपं दर्शयामास केशवः ॥ २२ ॥ उवाच सुप्रसन्नात्मा ब्रूहि विप्र
वरं परम् ॥ एवं श्रुत्वाक्षिणी यावदुन्मीलयति वै मुनिः ॥ २३ ॥ तदा शङ्खगदापाणिः पीतवासा जनार्दनः ॥ गरुडस्थोऽपि तेजस्वी द्वादशा
दित्यसुप्रभः ॥ २४ ॥ दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थितिः ॥ यदि भा सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ २५ ॥ तत्रैकस्थं
जगत्कृत्स्नं प्रविभक्तमनेकधा ॥ ददर्श स मुनिर्देवे विस्मयोत्फुल्ललोचनः ॥ २६ ॥ ननाम शिरसा देवं कृताञ्जलिरथाब्रवीत् ॥ यदि मे वरदो
देवो भूयाद्भक्तस्य केशवः ॥ २७ ॥ इदानीमेष नृपतिर्यथा सबलवाहनः ॥ ममाश्रमे कृताहारः श्वः प्रयाता स्वकं गृहम् ॥ २८ ॥ इत्युक्त
स्तस्य देवेशो वदतः संबभूव ह ॥ चित्तसिद्धिं ददौ तस्मै मणिं च सुमहाप्रभम् ॥ २९ ॥ तं दत्त्वान्तर्दधे देवः स च गौरमुखो मुनिः ॥
जगाम चाश्रमं पुण्यं नानार्षिनिषेवितम् ॥३०॥ तत्र गत्वा स विप्रेन्द्रश्चिन्तयामास वै मुनिः ॥ हिमवच्छिखराकारं महाभ्रमिव चोन्नतम् ॥
शशाङ्करश्मिसङ्काशं गृहं वै शतभूमिकम् ॥ ३१ ॥ तादृशानां सहस्राणि लक्षकोट्यश्च सर्वशः ॥ गृहाणि निर्ममे विप्रो विष्णोर्लब्धवर
स्तदा ॥ ३२ ॥ प्राकाराणि तथोपान्ते तद्वद्गोद्यानकानि च ॥ कोकिलाकुलघुष्टानि नानाद्विजवराणि च ॥ ३३ ॥ चम्पकाशोकपुन्नाग
नागकेसरवन्ति च ॥ नानाजात्यस्तथा वृक्षा गृहोद्यानेषु सर्वशः ॥ ३४ ॥ हस्तिनां हस्तिशालाश्च तुरगाणां च मन्दुराः ॥ चकार सञ्चयान्

विप्रो नाना भक्ष्यस्य सर्वशः ॥ ३५ ॥ भक्ष्यं भोज्यं तथा लेह्यं चोष्यं बहुविधं तथा ॥ चकाराऽन्नाद्यविषयं हेमपात्राणि सर्वतः ॥ ३६ ॥
एवमुक्त्वा स विप्रस्तु राजानं भूरितेजसम् ॥ उवाच स वैसैन्यानि प्रविशन्तु गृहाणिति ॥ ३७ ॥ एवमुक्तस्ततो राजा तद्गृहं पर्वतोपमम् ॥
प्रविवेशान्तरेष्वन्ये भृत्या विविशुराशु वै ॥३८॥ततस्तेषु प्रविष्टेषु तदा गौरमुखो मुनिः ॥ प्रगृह्य तं मणिं दिव्यं राजानं चेदमब्रवीत् ॥३९॥
मज्जनाभ्यवहारार्थं पथि प्रक्रामते तथा ॥ विलासिनीस्तथा दासान्प्रेषयिष्यामि ते नृप ॥ ४०॥ एवमुक्त्वा स विप्रेन्द्रस्तं मणिं वैष्णवं तदा ॥
एकान्ते स्थापयामास राज्ञस्तस्य प्रपश्यतः ॥ ४१ ॥ तस्मिन्स्थापितमात्रे तु मणौ शुद्धसमप्रभे ॥ निश्चेरुर्योषितस्त्वत्र दिव्यरूपाः सह
स्रशः ॥ ४२ ॥ सुकुमाराङ्गरागाद्याः सुकुमारा वराङ्गनाः ॥ सुकपोलाः सुचार्वङ्ग्यः सुकेशान्ताः सुलोचनाः ॥ ४३ ॥ काश्चित्सौवर्ण
पात्रीश्च गृहीत्वा सम्प्रतस्थिरे ॥ एवं योषिद्गणास्तत्र नराः कर्मकरास्तथा ॥ ४४ ॥ निर्जग्मुस्तस्य नृपतेः सर्वे भृत्या नृपस्य ह ॥ केवलं
भोजनं पूर्वं परिधानं च सर्वशः ॥४५॥ ताः स्त्रियः सर्वभृत्यानां राजमार्गेण मज्जनम् ॥ ददृशुस्ते नरास्तासां हस्तिनां चारुगामिनाम् ॥४६ ॥
नानाविधानि तूर्याणि तत्र वाद्यन्त सर्वशः ॥ मज्जतो नृपतेस्तस्य ननृतुश्चान्ययोषितः ॥ ४७ ॥ अपराश्च जगुस्तत्र शक्रस्येव प्रमज्जतः ॥ एवं
दिव्योपचारेण स्नात्वा राजा महामनाः ॥ ४८ ॥ चिन्तयामास राजेन्द्रो विस्मयाविष्टचेतनः ॥ किमिदं मुनिसामर्थ्यात्तपसो वाथवा
मणेः ॥४९॥ एवं स्नात्वोत्तमे वस्त्रे परिधाय नृपस्तथा ॥ विविधान्नं तु विधिना बुभुजे स नृपोत्तमः ॥ ५० ॥ यथा च नृपतेः पूजा कृता तेन
महर्षिणा ॥ तद्वद्भृत्यजनस्यापि चकार मुनिसत्तमः ॥ ५१ ॥ यावत्स राजा बुभुजे सभृत्यबलवाहनः ॥ तावदस्तगिरिं भानुर्जगामा
रुणसप्रभः ॥ ५२ ॥ ततस्तु रात्रिः समपद्यताऽधुना शरच्छशाङ्कोज्ज्वललक्ष्ममण्डिता ॥ करोति रागं स च रोहिणीधवः सुसङ्गतं
सौम्यगुणैर्युतोपि च ॥ ५३ ॥ भृगूद्वहः कृष्णतरांशुभानुना सहोद्यतो दैत्यगुरुः सुराधिपः ॥ अथान्यथापक्षगतो न राजते स्वभावयोगेन
मतिस्तु देहिनाम् ॥ ५४ ॥ सुरक्ततां भूमिसुतश्च मुञ्चते राहुः सितं चन्द्रमसोंशवः सिताः ॥ युक्तः स्वभावो जगतः सुरासुरैर्नतु
स्वभावो बलवीर्यकृन्नृप ॥ ५५ ॥ शनैश्चराख्यापितरश्मिमण्डले सूर्याग्रसिद्धान्तकथेव निर्म्मले ॥ करोति केतुर्न परो महत्तमस्तद।

कुशीलेषु गतिश्च निर्म्मला ॥ ५६ ॥ बुधोच्चबुद्धिर्जगतो विभावयन्राज राज्ञस्तनयः स्वकर्मभिः ॥ भृतीच्छुकः कश्चिविवाहिताश्चिराद्भवेदयं
साधुषु सम्मितो ध्रुवम् ॥ ५७ ॥ करोति केतुः कपिलं वियच्चिरं राज्ञः सुराणां पथि संस्थितो भृशम् ॥ न दुर्ज्जनः सज्जनसंसदि
क्वचित्करोति शुद्धं निजकर्मकौशलम् ॥ ५८ ॥ शशाङ्करश्मिप्रतिभासिता अपि प्रसादमीयुर्न रतीः पदेपदे ॥ कुलेभुवः
सम्भवधर्म्मपत्न्यो महांशुयोगान्महतः समुन्नतिः ॥ ५९ ॥ त्रिदोषसंक्रान्तिकृतोऽस्य सर्वशः सुतेन राज्ञो वरुणस्य सूर्यजाः ॥ चिरं जिता
कौशिकसन्निवेशिता न वेद कर्म्म क्वचिदन्यथा भवेत् ॥ ६० ॥ द्वन्द्वाः समेता मुनयः शिशुः पुरा हरिं य आराधितवान्नृपासनम् ॥ लक्ष्म्यापि
बुद्धया सुचिरं प्रकाशितं ध्रुवेण विष्णुस्मरणेन दुर्लभम् ॥ ६१ ॥ इतीव सा रात्रिरभून्मुनेः शुभे वराश्रमे दुर्ज्जयभूपतेः शुभा ॥ सभृत्यवर्गः
सगजाश्ववन्दिनां सुभक्तवस्त्राभरणादिपूजया ॥६२॥ इतीदृशो ये वररत्नचित्रिताः सुपट्टसंवीतवरान्विताः सदा ॥ गृहेषु पर्यङ्कवराः समास्थिताः
सुरूपयोषितिस्थितभङ्गभासुराः ॥६३॥ स तत्र राजा विससर्ज भूभृतः स्वयं सुभृत्यानपि सर्वतो गृहम् ॥ गतेषु सुष्वाप वरस्त्रिया वृतः सुरे
शवत्स्वर्गगतः प्रतापवान् ॥ ६४ ॥ एवं सुमनसस्तस्य सभृत्यस्य महात्मनः ॥ ऋषेस्तस्य प्रभावेण हृष्टाः प्रसुषुपुस्तदा ॥ ६५ ॥ ततो
रात्र्यां व्यतीतायां स राजा ताः पुनः स्त्रियः ॥ अन्तर्द्धानं गतास्तत्र दृष्ट्वा तानि गृहाणि वा ॥ ६६ ॥ अदृश्यानि महार्हाणि वरासनगतानि
च ॥ स राजा विस्मयाविष्टश्चिन्तयामास दुःखितः ॥ ६७ ॥ कथमेवं मणिर्मह्यं भवतीति पुनः पुनः ॥ चिन्तयन्नधिगम्याथ स राजा दुर्ज्जय
स्तथा ॥ ६८ ॥ चिन्तामणिमिमं चास्य हरामीति विचिन्त्य च ॥ प्रयाणं चोदयामास स राजाऽऽश्रमबाह्यतः ॥ ६९ ॥ आश्रमस्य बहि
र्गत्वा नातिदूरे सवाहनः ॥ ततो विरोचनाख्यं वै प्रेषयामास मन्त्रिणम् ॥ ७० ॥ ऋषेर्गौरमुखस्यापि मणेर्याचनकर्मणि ॥ ऋषिं तं च समा
गत्य मणिं याचितुमुद्यतः ॥ ७१ ॥ रत्नानां भाजनं राजा मणिं तस्मै प्रदीयताम् ॥ अमात्येनैवमुक्तस्तु क्रुद्धो गौरमुखोऽब्रवीत् ॥ ७२ ॥
प्रतिग्राहीति विप्रस्तु राजा चैव ददाति च ॥ त्वं च राजा पुनर्भूत्वा याचसे दीनवत्कथम् ॥७३॥ एवं ब्रूहि दुराचारं राजानं दुर्ज्जयं स्वयम् ॥
गच्छ द्रुतं दुराचार मा त्वां लोकोऽत्यगादिति ॥ ७४ ॥ एवमुक्तस्तदा दूतो जगाम च नृपान्तिकम् ॥ कथयामास तत्सर्वं यदुक्तं

ब्राह्मणेन च ॥ ७६ ॥ ततः क्रोधपरीतात्मा श्रुत्वा ब्राह्मणभाषितम् ॥ दुर्जयः प्राह नीलाख्यं तामन्तं गच्छ माचिरम् ॥ ७६ ॥
ब्राह्मणस्य मणिं गृह्य तूर्णमेहि यदृच्छया ॥ ७७ ॥ एवमुक्तस्तदा नीलो बहुसेनापरिच्छदः ॥ जगाम स च विप्रस्य
वन्यमाश्रममण्डलम् ॥ ७८ ॥ तत्राग्निहोत्रशालायां दृष्ट्वा तं मणिमाहितम् ॥ उत्तीर्य स्यन्दनान्नीलः सोऽवारोहत भूतले ॥ ७९ ॥ अवतीर्णे
ततस्तस्मिन्नीले परमदारुणे ॥ क्रूरबुद्ध्या मणेस्तस्मान्निर्जग्मुः शस्त्रपाणयः ॥ ८० ॥ सरथाः सध्वजाः साश्वाः सवर्माः सासिचर्मिणः ॥
सधनुष्काः सतूणीरा योधाः परमदुर्जयाः ॥ ८१ ॥ निश्चेरुस्तं मणिं भित्वा त्वसंख्येया महाबलाः ॥ तत्र सन्ना महा शूरा दश पंच
व संख्यया ॥ ८२ ॥ नामभिस्तान्महाभागे कथयामि शृणुष्व तत् ॥ सुप्रभो दीप्ततेजाश्च सुरश्मिः शुभदर्शनः ॥ ८३ ॥ सुकान्तिः
सुन्दरः सुन्दः प्रद्युम्नः सुमनाः शुभः ॥ सुशीलः सुखदः शम्भुः सुदान्तः सोम एव च ॥ एते पंचदश प्रोक्ता नायका उत्थिता मणेः ॥ ८४ ॥
ततो विरोचनं दृष्ट्वा बहुसैन्यपरिष्कृतम् ॥ योधयामासुरव्यग्रा विविधायुधपाणयः ॥ ८५ ॥ धनूंपि तेषां कनकप्रभाणि शरान्सुजा
म्बूनदपुंखनद्धान् ॥ पतन्ति खड्गानि विभीषणानि भुशुण्डिशूलाः परमप्रधानाः ॥ ८६ ॥ रथो रथं सम्परिवार्य तस्थौ गजो गजस्यापि हयो
हयस्य ॥ पदातिरत्युग्रपराक्रमश्च पदातिमेव प्रससार चाग्र्यम् ॥ ८७ ॥ द्वन्द्वान्यनेकानि तथैव युद्धे द्रवन्ति शूराः परिभर्त्सयन्तः ॥ विभीषणं
निर्गतसाधुमार्गं बभूव रक्तप्रभवं सुघोरम् ॥ ८८ ॥ तथा प्रवृत्ते तुमुले च युद्धे हतः स राज्ञः सचिवो विसंज्ञः ॥ सहानुगः सर्वबलैरुपेतो जगाम
वैवस्वतमन्दिराय ॥ ८९ ॥ तस्मिन्हते दुर्जयराजमन्त्रिणि उपाययौ स्वेन बलेन राजा ॥ स दुर्जयः साश्वरथोऽतितीव्रः प्रतापवांस्तैर्मणिजै
र्युयोध ॥ ९० ॥ ततस्तस्मिंस्तदा राज्ञो महत्कदनमावभौ ॥ ततो हेतृप्रहेतृभ्यां श्रुत्वा जामातरं रणे ॥ ९१ ॥ युध्यमानं महाबाहुं ततश्चानि
यतुश्चमूम् ॥ तस्मिन्बले ये दैतेयास्ताञ्छृणुष्व धरेरितान् ॥ ९२ ॥ प्रघसो विघसश्चैव सङ्घसोऽशनिसप्रभः ॥ विद्युत्प्रभः सुघोषश्च उन्मत्ताक्षो
भयङ्करः ॥ ९३ ॥ अग्निदत्तोऽग्नितेजाश्च बाहुः शक्रः प्रतर्दनः ॥ विरोधो भीमकर्म्मा च विप्रचित्तिस्तथैव च ॥ ९४ ॥ एते पंचदश श्रेष्ठाः
असुराः परमायुधाः ॥ अक्षौहिणीपरीवार एकैकोऽत्र पृथक्पृथक् ॥ ९५ ॥ महामायास्तु समरे दुर्जयस्य दुरात्मनः ॥ युयुधुर्मणिजैः सार्द्धं

महासैन्यपरिच्छन्नः ॥ ९६ ॥ तं सतेजास्त्रिभिर्बाणैर्विघतं सम्प्राविध्य च ॥ सङ्गं सदशभिर्बाणैः सुरश्मिः प्रत्यविध्यत ॥ ९७ ॥ अशनिप्रभं रणेऽविध्यत्पञ्चभिः शुभदर्शनः ॥ विद्युत्प्रभं सुकान्तिस्तु सुघोषं सुन्दरस्तथा ॥ ९८ ॥ उन्मत्ताक्षं तथाविध्यत्सुन्दः पंचभिराशुगैः ॥ चकर्त च धनुस्तस्यं शितेन नतपर्वणा ॥ ९९ ॥ सुमना अग्निदंष्ट्रं तु सुवेदश्चाग्नितेजसम् ॥ सुनलो वायुशक्रौ तु सुरेदस्तु प्रतर्दनम् ॥ १०० ॥ परस्परं सुयुद्धेन योधयित्वास्त्रलाघवात् ॥ यथासंख्येन ते दैत्याः पुनर्मणिभवैर्हताः ॥ १०१ ॥ यावत्स सङ्गरो घोरो महांस्तेषां व्यवर्द्धत ॥ तावत्समित्कुशादानि कृत्वा गौरमुखो मुनिः ॥ १०२ ॥ आगतो महदाश्चर्यसंग्रामं भयदर्शनम् ॥ बहुसैन्यपरीवारं स्थितं तं चापि दुर्जयम् ॥ १०३ ॥ तद्दृष्ट्वा स मुनिर्द्वारि चिन्तासंलग्नचेतनः ॥ उपविश्याधिगम्याथ. मणेः कारणमेव ह ॥ १०४ ॥ एवं कृत्वा मणिकृतं रौद्रं गाढं च संयुगम् ॥ चिन्तयामास देवेशं हरिं गौरमुखो मुनिः ॥ स देवः पुरतस्तस्य पीतवासाः खगासनः ॥ किमत्र ते मया कार्यमिति वाणीमुदीरयन् ॥ १०५ ॥ स ऋषिः प्राञ्जलिर्भूत्वा प्रोवाच पुरुषोत्तमम् ॥ जहीमं दुर्जयं पापं सैन्येन परिवारितम् ॥ १०६ ॥ एवं मुक्तं तदा तेन चक्रं ज्वलनसन्निभम् ॥ तेन चक्रेण तत्सैन्यमसुरैर्दुर्जयं बलात् ॥ १०७ ॥ निमेषान्तरमात्रेण समग्रं भस्मसात्कृतम् ॥ एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा ॥ १०८ ॥ उवाच निमिषेणेदं निहतं दानवं कुलम् ॥ अरण्येऽस्मिंस्ततस्त्वेवं नैमिषारण्यसंज्ञितम् ॥ १०९॥ भविष्यति यथार्थं वै ब्राह्मणानां निवेशनम् ॥ अहं च यज्ञपुरुष एतस्मिन्वनगोचरे ॥ ११०॥ नाम्ना याज्या सह्या चेमे दश पंच च नायकाः ॥ कृते युगे भविष्यन्ति राजानो मणिजा इमे ॥ १११ ॥ एवमुक्त्वा ततो. देवो गतोऽन्तर्द्धानमीश्वरः॥ द्विजोऽपि स्वाश्रमे तस्थौ मुदा परमया युतः॥११२॥ इति वराहपुराणे आदिकृतवृत्तान्ते दुर्जयचरितं नाम एकादशोऽध्यायः ॥११॥

वराह उवाच ॥ ततस्तत्र रथाङ्गाग्नौ दग्धाञ्छ्रुत्वा नरोत्तमान् ॥ महच्छोकपरीतात्मा चिन्तयामास पार्थिवः ॥ १ ॥ तस्य चिन्तयतस्त्वेवं तत्त्वबुद्धिरजायत ॥ चित्रकूटे गिरौ विष्णू राघवश्च प्रकीर्त्यते ॥ २ ॥ ततोऽहं नामसंज्ञाभिर्हरिं स्तौमि जगत्पतिम् ॥ इति संचिन्त्य नृपतिर्जगाम गिरिमुत्तमम् ॥ ३ ॥ चित्रकूटं महापुण्यं नृपः स्तोत्रमुदीरयन् ॥ ४ ॥ दुर्जय उवाच ॥ नमामि रामं नरनाथमच्युतं कविं पुराणं

त्रिदशारिनाशनम् ॥ शिवस्वरूपं प्रभवं महेश्वरं सदा प्रपन्नार्तिहरं धृतश्रियम् ॥ ५ ॥ भवान् सदा देव समस्ततेजसां करोषि तेजांसि समस्त
रूपधृक् ॥ क्षितौ भवान् पंचगुणस्तथा जले चतुःप्रकारस्त्रिविधोऽथ तेजसि ॥ ६ ॥ द्विधाऽथ वायौ वियति प्रतिष्ठितो भवान् हरिः
शब्दचरः पुमानसि ॥ भवाञ्छशी सूर्यहुताशनोऽसि त्वयि प्रलीनं जगदेतदुच्यते ॥ ७ ॥ भवत्प्रतिष्ठं रमते जगद्यतः ततोऽसि रामेति
जगत्प्रतिष्ठितः ॥ भवार्णवे दुःखतरोर्मिसङ्कुले तथाक्षमीनग्रहनक्रभीषणे ॥ ८ ॥ न मज्जति त्वत्स्मरणप्लवो नरः स्मृतोऽसि रामेति तथा तपो
वने ॥ वेदेषु नष्टेषु भवांस्तथा हरे करोषि मात्स्यं वपुरात्मनः सदा ॥ ९ ॥ युगक्षये रश्मिनसर्वदिङ्मुखे भवांस्तथाग्निर्बहुरूपधृग्विभो ॥ कौर्मं
तथा स्वं वपुरास्थितः सदा युगेयुगे माधव सिन्धुमन्थने ॥ १० ॥ न चान्यदस्तीति भवत्समं क्वचिज्जनार्दनाद्यं त्वप्रभवं पुरा चोत्तमम् ॥ त्वया
ततं विश्वमिदं महात्मँल्लोकाखिला वेद दिशश्च सर्वाः ॥ ११ ॥ कथं त्वमाद्यं परमं तु धाम विहाय चान्यं शरणं व्रजामि ॥ भवानेकः पूर्वमा
सीत्ततश्च महानहं सलिलं वह्निरूपैः ॥ वायुस्तथा खं च मनोऽपि बुद्धिस्त्वत्तो गुणास्त्वत्प्रभवं च सर्वम् ॥ १२ ॥ त्वया ततं विश्वमिदं समस्तं
सनातनस्त्वं पुरुषो मतो मे ॥ समस्तविश्वेश्वर विश्वमूर्त्ते सहस्रबाहो जय देवदेव ॥ १३ ॥ नमोऽस्तु रामाय महानुभाव इति स्तुतो देव
वरः प्रसन्नः ॥ तदा तु राज्ञः सुप्रतीकाय मूर्तिं सन्दर्शयामास ततोऽभ्युवाच ॥ १४ ॥ वरं वृणीष्वेति च सुप्रतीक एवं श्रुत्वा वचनं तस्य
राजा ससम्भ्रमं देववरं प्रणम्य ॥ उवाच देवेश्वर मे प्रयच्छ लयं यदास्ते परमं वपुस्ते ॥ १५ ॥ इतीरिते राजवरः क्षणेन लयं तथाऽगदा
सुरघ्नमूर्तौ ॥ ध्यानेन युक्तः पुरुषं गृणन्तं स्थितस्ततस्मिन्नात्मभूतो विमुक्तः स भूमिपः कर्म्मकाण्डैरनेकैः ॥ १६ ॥ वराह उवाच ॥ इतीरितं ते तु
मया पुराणं स्वयम्भुवे चादिकृतैकदेशम् ॥ शक्यं न चास्यैव बहुभिः सहस्रैरपीह केनापि सुखेन वक्तुम् ॥ १७ ॥ उद्देशतः संस्मृतमात्रमेतन्मयाऽपि
भद्रे कथितं पुराणम् ॥ समुद्रतोयात्परिमाणमल्पं क्वचित्क्वचिद्दत्तमथो ह्यनर्घम् ॥ १८ ॥ स्वयम्भुवा कथितं ब्रह्मणापि नारायणेनाप्यकुतोभयेन ॥
अशक्यमस्माभिरितीरितं ते न मूर्त्तमस्य स्मरणीयमाद्यम् ॥ १९ ॥ समुद्रे वालुकासङ्ख्या विद्यते रजसः क्षितौ ॥ न तु चास्य पुनः सङ्ख्या
क्रीडतः परमेष्ठिनः ॥ २० ॥ एष नारायणस्यांशो मया प्रोक्तः शुचिस्मिते ॥ कृतस्य वृत्तान्त एव किमन्यच्छ्रोतुमिच्छसि ॥ २१ ॥ इति

वराहपुराणे आदिकृतवृत्तान्ते दुर्जयचरिते नारायणैश्वर्यं द्वादशोऽध्यायः ॥ १२ ॥ अथ श्राद्धकल्पः ॥ धरण्युवाच ॥ एतन्मे महदैश्वर्यं दृष्ट्वा
गौरमुखो मुनिः ॥ ते चापि मणिजाः प्राप्ताः किं फलं तु वरं गुरो ॥ १ ॥ कोऽसौ गौरमुखः श्रीमान्मुनिः परमधार्मिकः ॥ किं चकार हरेः कर्म
दृष्ट्वाऽसौ मुनिपुङ्गवः ॥ २ ॥ वराह उवाच ॥ निमिषेण कृतं कर्म दृष्ट्वा भगवता मुनिः ॥ आरिराधयिषुर्देवं तमेव प्रययौ वनम् ॥ ३॥ प्रभासं
नाम सोमस्य तीर्थं परमदुर्लभम् ॥ तत्र दैत्यान्तकृद्देवः प्रोच्यते तीर्थचिन्तकैः ॥ ४ ॥ आराधयामास हरिं दैत्यसूदनसंज्ञितम् ॥ तस्याराधयतो
देवं हरिं नारायणं प्रभुम् ॥ आजगाम महायोगी मार्कण्डेयो महामुनिः ॥ ५॥ स दृष्ट्वाभ्यागतं दूराद्दर्घ्येन तं मुनिः ॥ अर्चयामास वै भक्त्या
मुदा परमया युतः ॥ ६ ॥ कौश्यां बृस्यां तदासीनं पप्रच्छेदं मुनिस्तदा ॥ शाधि मां मुनिशार्दूल किं करोमि महाव्रत ॥ ७ ॥ एवमुक्तः स
विप्रेन्द्रो मार्कण्डेयो महातपाः ॥ उवाच श्लक्ष्णया वाचा मुनिं गौरमुखं तदा ॥ ८॥ मार्कण्डेय उवाच ॥ सर्वेषामेव देवानामाद्यो नारायणो गुरुः ॥
तस्माद्ब्रह्मा समुत्पन्नः सोऽपि सप्तासृजन्मुनीन् ॥ ९ ॥ मां यजस्वेति तेनोक्तास्तदा ते परमेष्ठिना ॥ आत्मनात्मानमेवाग्रे अयजन्त इति
श्रुतिः ॥ १० ॥ तेषां वै ब्रह्मजातानां महावैकारिकर्म्मणाम् ॥ अशपद्व्यभिचारो हि महानेष कृतो यतः ॥ प्रभ्रष्टज्ञानिनः सर्वे भविष्यन्ति
न संशयः ॥ ११ ॥ एवं शप्तास्ततस्ते वै ब्रह्मणात्मसमुद्भवाः ॥ सद्यो वंशकरान्पुत्रानुत्पाद्य त्रिदिवं ययुः ॥ १२ ॥ तवस्तेषु प्रयातेषु
त्रिदिवं ब्रह्मवादिषु ॥ तत्पुत्राः श्राद्धदानेन तर्पयामासुरञ्जसा ॥ १३ ॥ ते च वैमानिकाः सर्वे ब्रह्मणः सप्त मानसाः ॥
तत्पिण्डदानं मन्त्रोक्तं प्रपश्यन्तो व्यवस्थिताः ॥ १४ ॥ गौरमुख उवाच ॥ ये च ते पितरो ब्रह्मन् यं च कालं समासते ॥ कियन्तो
वै पितृगणास्तास्मिन् लोके व्यवस्थिताः ॥ १५ ॥ मार्कण्डेय उवाच ॥ प्रवर्तन्ते वराः केचिद्देवानां सोमवर्द्धनाः ॥ ते मरीच्यादयः
सप्त स्वर्गे ते पितरः स्मृताः ॥ १६ ॥ चत्वारो मूर्त्तिमन्तो वै त्रयस्त्वन्ये ह्यमूर्तयः ॥ तेषां लोकनिसर्गं च कीर्तयि
ष्यामि तच्छृणु ॥ १७ ॥ लोकाः सन्तानका नाम यत्र तिष्ठन्ति भास्वराः ॥ देवानां पितरस्ते हि तान्यजन्तीह देवताः ॥ १८॥ एते वै लोक
विभ्रष्टा लोकान् प्राप्य सनातनान् ॥ पुनर्युगशतान्तेषु जायन्ते ब्रह्मवादिनः ॥ १९॥ ते प्राप्य तां स्मृतिं भूयः साङ्ख्ययोगमनुत्तमम् ॥ चिन्त्य

योगगतिं शुद्धां पुनरावृत्तिदुर्लभाम् ॥ २० ॥ एते स्म पितरः श्राद्धे योगिनां योगवर्द्धनाः ॥ आप्यायितास्तु ते सर्वे योगियोगबलेन च ॥ २१ ॥ तस्माच्छ्राद्धानि देयानि योगिनां योगिसत्तम ॥ एष वै प्रथमः सर्गः सोमपानामनुत्तमः ॥ २२ ॥ एते त एकशतशो वर्त्तन्ते द्विज सत्तमाः ॥ भूर्लोकवासिनां याज्याः स्वर्गोलोकनिवासिनः ॥ २३ ॥ ब्रह्मपुत्रा मरीच्याद्यास्तेषां याज्या मरुद्गणाः ॥ कलशाद्यतिकसंज्ञानां तेषा मपि जनैर्वृताः ॥ २४ ॥ सनकाद्यास्तनस्तेषां वैराजास्तपसि स्थिताः ॥ तेषां सप्त गणाः प्रोक्ता इत्येषा पितृसन्ततिः ॥ २५ ॥ तेऽपि याज्याः पृथग्वर्णैर्न शूद्रेभ्यः पृथक्कृताः ॥ वर्णत्रयाभ्यनुज्ञातः शूद्रः सर्वान्पितॄन्यजेत् ॥ २६ ॥ ते तु तस्य पृथक् सन्ति पितरः शूद्रजातयः ॥ मुक्ताश्वेतनका ब्रह्मन्न दृश्यन्ते पितृष्वपि ॥ २७ ॥ विशेषशास्त्रदृष्ट्या तु पुराणानां च दर्शनात् ॥ एवं ऋषिस्तुतेः शास्त्रैर्ज्ञात्वा याज्यान् स्वसम्भवान् ॥ २८ ॥ स्वयं सृष्ट्वां स्मृतिं लब्ध्वा पुत्राणां ब्रह्मणा ततः ॥ परं निर्वाणमापन्नास्तेऽपि ज्ञानेन चैव हि ॥ २९ ॥ वस्वादीनां कश्यपाद्या वर्णानां वासवादयः ॥ अविशेषेण विज्ञेया गन्धर्वाद्या अपि ध्रुवम् ॥ ३० ॥ एष ते पैतृकः सर्ग उद्देशेन महामुने ॥ कथितो नान्त एवास्य वर्षकोट्या हि दृश्यते ॥ ३१ ॥ अथश्राद्धकालाः ॥ श्राद्धस्य कालान्वक्ष्यामि तच्छृणुष्व द्विजोत्तम ॥ श्राद्धार्हमागतं द्रव्यं विशिष्ट मथवा द्विजम् ॥ ३२ ॥ श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ॥ ३३ ॥ विषुवे चैव संप्राप्ते ग्रहणे शशिसूर्ययोः ॥ समस्तेष्वेव विप्रेन्द्र राशिष्वर्केऽतिगच्छति ॥ ३४ ॥ नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने ॥ इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा ॥ ३५ ॥ अमावस्या यदा आर्द्रा विशाखास्वातियोगिनी ॥ श्राद्धैः पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीं ॥ ३६ ॥ अमावस्या यदा पुष्ये रौद्रेऽर्क्षे च पुनर्वसौ ॥ द्वाद शाब्दं तथा तृप्तिं प्रायान्ति पितरोऽर्चिताः ॥ ३७ ॥ वासवाजैकपदर्क्षे पितॄणां तृप्तिमिच्छताम् ॥ वारुणे चाप्यमावस्या देवानामपि दुर्लभा ॥ ३८ ॥ नवस्वर्क्षेष्वमावास्या यदा तेषु द्विजोत्तम ॥ तदा श्राद्धानि देयानि अक्षय्यफलमिच्छताम् ॥ अपि कोटिसहस्रेण पुण्यस्यान्तो न विद्यते ॥ ३९ ॥ अथापरं पितरः श्राद्धकालं रहस्यमस्मात्प्रवदन्ति पुण्यम् ॥ वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्ल पक्षे ॥ ४० ॥ नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पंचदशी च माघे ॥ उपप्लवे चन्द्रमसो रवेश्च चतुर्ष्वष्टकास्वयनद्वये च ॥ ४१ ॥

पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥ श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत्पितरो वदन्ति ॥४२॥ माघासिते पंचदशी कदाचिदुपैति योगं यदि वारुणेन ॥ ऋक्षेण कालः परमः पितॄणां न ह्यल्पपुण्यैर्द्विज लभ्यतेऽसौ ॥ ४३ ॥ काले धनिष्ठा यदि नाम तस्मिन् लभ्येत विप्रेन्द्र यदा पितृभ्यः ॥ दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥ ४४ ॥ तत्रैव चेद्भाद्रपदा तु पूर्वा काले तदा यैः क्रियते पितृभ्यः ॥ श्राद्धं परां तृप्तिमुपैत्यनेन युगं समग्रं पितरः स्वपन्ति ॥ ४५ ॥ गङ्गां शतद्रूमथवा विपाशां सरस्वतीं नैमिषगोमतीं वा ॥ ततो गवाद्यर्चनमादरेण कृत्वा पितॄणामहितानि हन्ति ॥ ४६ ॥ गायन्ति चैतत्पितरः कदा तु त्रयोदशीयुक्तमघासु भूयः ॥ वर्षासितान्ते शुभ तर्थितोयैर्यास्याम तृप्तिं तनयादिदत्तैः ॥४७॥ चित्तं च वित्तं च नृणां विशुद्धं शस्तश्च कालः कथितो विधिश्च ॥ पात्रं यथोक्तं परमा च भक्तिः नृणां प्रयच्छन्त्यभिवाञ्छितानि ॥ ४८ ॥ अथ पितॄणां गीतम् ॥ पितृगीतांस्तथैवात्र श्लोकांस्ताञ्शृणु सत्तम ॥ श्रुत्वा तथैव भविता भाव्यं तत्र सदात्मना ॥ ४९ ॥ अपि धन्यः कुले जायादस्माकं मतिमान्नरः ॥ अकुर्वन्वित्तशाठ्यं यः पिण्डान्नो निर्वपिष्यति ॥ ५० ॥ रत्नवस्त्र महायानं सर्वं तोयादिकं वसु ॥ विभवे सति विप्रेभ्यः अस्मानुद्दिश्य दास्यति ॥ ५१ ॥ अन्नेन वा यथाशक्त्या कालेऽस्मिन् भक्तिनम्रधीः ॥ भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः ॥ ५२ ॥ असमर्थोऽन्नदानस्य वन्यशाकं स्वशक्तितः ॥ प्रदास्यति द्विजाग्र्येभ्यः स्वल्पां यो वापि दक्षिणाम् ॥ ५३ ॥ तत्राप्यसामर्थ्ययुतः करैर्गृह्यासितांस्तिलान् ॥ प्रणम्य द्विजमुख्याय कस्मैचिद्दपि दास्यति ॥ ५४ ॥ तिलैः सप्ताष्टभिर्वापि समवेतं जलाञ्जलिम् ॥ भक्तिनम्रः समुद्दिश्य योऽस्माकं सम्प्रदास्यति ॥ ५५ ॥ यतः कुतश्चित्सम्प्राप्य गोभ्यो वापि गवाह्निकम् ॥ अभावे प्रीणयेत्तस्माद्भक्त्या युक्तः प्रदास्यति ॥५६॥ सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः ॥ सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥५७॥ न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धस्य योग्यं स्वपितॄन्नतोऽस्मि ॥ तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ ततौ वर्त्मनि मारुतस्य ॥ ५८ ॥ इत्येवं पितृभिर्गीतं भावाभावप्रयोजनम् ॥ कृतं तेन भवेच्छ्राद्धं य एवं कुरुते द्विजः ॥ ५९ ॥ इति वराहपुराणे आदिकृतवृत्तान्ते श्राद्धकल्पोनाम त्रयोदशोऽध्यायः ॥ १३ ॥ श्राद्धे केतनयोग्यायोग्यब्राह्मणादिनिरूपणम् ॥ मार्कण्डेय उवाच ॥ एतन्मे कथितं पूर्वं

ब्रह्मपुत्रेण धीमता ॥ सनकानुजेन विप्रर्षे ब्रह्मणा शृणु साम्प्रतम् ॥ १ ॥ त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित् ॥ ऋत्विजं भागिनेयं च दौहित्रं श्वशुरं तथा ॥ २ ॥ जामातरं मातुलं च तपोनिष्ठं च ब्राह्मणम् ॥ पंचाग्न्यभिरतं चैव शिष्यं सम्बन्धिनं तथा ॥ ३ ॥ मातापितृ रतं चैव एतान्श्राद्धे नियोजयेत् ॥ मित्रध्रुक्कुनखी चैव श्यावदन्तस्तथा द्विजः ॥ ४ ॥ कन्यादूषयिता चैव वह्निदः सोमविक्रयी ॥ अभिशस्त स्तथा स्तेनः पिशुनो ग्रामयाजकः ॥ ५ ॥ भृतकाध्यापकश्चैव भृतकाध्यापकश्च यः ॥ परपूर्वापतिश्चैव मातापित्रोस्त्यजकः ॥ ६ ॥ वृषलीसूतिपोष्यश्च वृषलीपतिरेव च ॥ तथा देवलकश्चैव श्राद्धे नार्हन्ति केतनम् ॥ ७ ॥ निमन्त्रणादिक्रम् ॥ प्रथमेह्नि बुधः कुर्याद्वि प्राग्र्याणां निमन्त्रणम् ॥ आनिमन्त्र्य द्विजान्पश्चादागतान्भोजयेद्यतीन् ॥ ८ ॥ पादशौचादिना गेहमागतान्भोजयेद्द्विजान् ॥ पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ ९ ॥ ब्राह्मणसंख्यादिः ॥ पितृणामयुजो युग्मं देवानामपि योजयेत् ॥ देवानामेकमपि वा पितृणां च निवेदयेत् ॥ १० ॥ तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ॥ कुर्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदेविकम् ॥ ११ ॥ प्राङ्मुखं भोजयेद्विप्रं देवानामुभयात्मकम् ॥ पितृपैतामहानां च भोजयेच्चाप्युदङ्मुखान् ॥ १२ ॥ पृथक् तयोः केचिदाहुः श्राद्धस्य करणं द्विजः ॥ एकत्रैकेन पात्रेण वदन्त्यन्ये महर्षयः ॥ १३ ॥ श्राद्धप्रकारः ॥ विष्टरार्थं कुशान्दत्त्वा सम्पूज्यार्घविधानतः ॥ कुर्यादावाहनं प्राज्ञो देवानां तदनुज्ञया ॥ १४ ॥ यवाम्बुना च देवानां दद्यादर्घं विधानवित् ॥ सुगन्धधूपदीपांश्च दत्त्वा तेभ्यो यथाविधि ॥ १५ ॥ पितृणामपसव्येन सर्वमेवोपकल्पयेत् ॥ अनुज्ञां च ततः प्राप्य दत्त्वा दर्भान्द्विधाकृतान् ॥ १६ ॥ मन्त्रपूर्वं पितृणां तु कुर्यादावाहनं बुधः ॥ तिलाम्बुना चापसव्यं दद्यादर्घादिकं बुधः ॥ १७ ॥ तत्रातिथ्यागमे ॥ काले तत्रातिथिं प्राप्तमन्नकामं द्विजाध्वगम् ॥ ब्राह्मणैरभ्यनुज्ञातः कामं तमपि पूजयेत् ॥ १८ ॥ योगिनो विविधै रूपैर्नराणामुपकारिणः ॥ भ्रमन्ति पृथिवीमेतामविज्ञातस्वरूपिणः ॥ १९ ॥ तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं बुधः ॥ श्राद्धक्रियाफलं हन्ति द्विजेन्द्रापूजितोऽतिथिः ॥ २० ॥ तत्र होमविधिः ॥ जुहुयाद्व्यञ्जनक्षारवर्ज्यमन्नं ततोऽनले ॥ अनुज्ञातो द्विजैस्तैस्तु त्रिः कृत्वा पुरुषर्षभ ॥ २१ ॥ अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः ॥ सोमाय वै पितृमते दातव्या तदनन्तरम् ॥ २२ ॥ वैवस्वताय चैवान्या तृतीया दीयते तु सा ॥ हुतावं

शिष्टमल्पाल्पं विप्रपात्रेषु निर्वपेत् ॥ २३ ॥ ततो भोजनम् ॥ ततोऽन्नं मृष्टमत्यर्थमभीष्टमभिसंस्कृतम् ॥ दत्त्वा जुषध्वमिच्छातो वाच्य
मेतदनिष्ठुरम् ॥ २४ ॥ भोक्तव्यं तैश्च तच्चित्तैर्मौनिभिः सुमुखैः स्थिरम् ॥ अक्रुध्यताप्यत्वरता देयं तेनापि भक्तितः ॥ २५ ॥ अभिश्रव
णम् ॥ रक्षोघ्नमन्त्रपठनं भूमेरास्तरणं तिलैः ॥ कृत्वाध्यापाश्च पितरस्त एव द्विजसत्तमाः ॥ २६ ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥
मम तृप्तिं प्रयान्त्वद्य होमाप्यायितमूर्त्तयः ॥ २७ ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ मम तृप्तिं प्रयान्त्वद्य विप्रदेहेषु संस्थिताः॥२८॥
पिता पितामहश्चैव तथैव प्रपितामहः ॥ तृप्तिं प्रयान्तु पिण्डेषु मया दत्तेषु भूतले॥२९ ॥पिता पितामहश्चैव तथैव प्रपितामहः ॥ तृप्तिं प्रयान्तु
मे भक्त्या यन्मयैतदुदाहृतम् ॥३० ॥ मातामहस्तृप्तिमुपैतु तस्य तथा पिता तृप्तिमुपैतु योऽन्यः ॥ विश्वेऽथ देवाः परमां प्रयान्तु तृप्तिं प्रण
श्यन्तु च यातुधानाः ॥ ३१ ॥ यज्ञेश्वरो यज्ञसमस्तनेता भोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ॥ तत्सन्निधानादपयान्तु सद्यो रक्षांस्यशेषाण्यसुरा
श्च सर्वे ॥ ३२ ॥ विकिरान्नदानादि॥ तृप्तेष्वेतेषु विप्रेषु किरेदन्नं महीतले ॥ दद्यादाचमनार्थाय तेभ्यो वारि सकृत्सकृत् ॥ ३३ ॥ सुतृप्तैस्तै
रनुज्ञातः सर्वेणान्नेन भूतले ॥ अथ पिण्डदानादि ॥ सलिलेन ततः पिण्डान् सम्यग्गृह्य समाहितः ॥ ३४ ॥ पितृतीर्थेन सलिलं तथैव सलि
लाञ्जलिम् ॥ मातामहेभ्यस्तेनैव पिण्डांस्तीर्थेषु निर्वपेत् ॥ ३५ ॥ दक्षिणाग्रेषु दर्भेषु पुष्पधूपादिपूजितम् ॥ स्वपित्रे प्रथमं पिण्डं दद्या
दुच्छिष्टसन्निधौ ॥ ३६॥ पितामहाय चैवान्यं तत्पित्रे च तथापरम् ॥ दर्भमूले लेपभुजां लेपयेल्लेपघर्षणात् ॥ ३७॥ पिण्डैर्मातामहांस्तद्वद्गन्ध
माल्यादिसंयुतैः ॥ पूजयित्वा द्विजाग्र्याणां दद्यादाचमनं बुधः ॥३८॥ पितृभ्यः प्रथमं भक्त्या तन्मनस्को द्विजेश्वरः ॥ स्वस्त्यादि वाचयित्वा
तु दद्याच्छक्त्या च दक्षिणाम् ॥ ३९ ॥ दत्त्वा च दक्षिणां तेभ्यो वाचयेद्वैश्वदेविकम् ॥ प्रीयन्तामिति ये विश्वेदेवास्ते स इतीरयेत् ॥ ४० ॥
तथेति चोक्ते तैर्विप्रैः प्रार्थनीयास्तथाशिषः ॥ तथा विसर्जयेद्देवान् पूर्वं पैत्र्यान्महामते ॥ ४१ ॥ मातामहानामप्येवं सह दैवैः क्रमात्स्थितैः ॥
भोजने च स्वशक्त्या च दाने तद्वद्विसर्जने ॥ आपादशौचनात्पूर्वं कुर्याद्देवं द्विजन्मसु ॥४२॥ ज्ञानिनं प्रथमं विप्रं त्रिषु मातामहादिषु ॥ तथा
विसर्जयेत्प्राज्ञः सम्मान्याभ्यर्थितस्ततः ॥ ४३ ॥ निवर्त्तेताभ्यनुज्ञात आद्वारान्तमनुव्रजेत् ॥ श्राद्धान्ते वैश्वदेवादि ॥ ततस्तु वैश्वदेवाख्यां

कुर्यान्नित्यक्रियां ततः ॥ ४४ ॥ भुञ्जीयाच्च समं पूज्य भृत्यबन्धुभिरात्मना ॥ एवं श्राद्धं बुधः कुर्यात्पित्र्यं मातामहं तथा ॥ श्राद्धैराप्यायिता
दद्युः सर्वान् कामान्पितामहाः ॥ ४५ ॥ त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ॥ रजतस्य तथा दानं तथा संदर्शनादिकम् ॥ ४६ ॥
वर्ज्यं तु कुर्वता श्राद्धं क्रोधोऽध्वगमनं त्वरा ॥ भोक्तु रज्यति विप्रेन्द्रे त्रयमेतन्न संशयः ॥ ४७ ॥ विश्वेदेवाः सपितरस्तथा मातामहा द्विज ॥
कुलं चाप्यायितं पुंसा सर्वं श्राद्धं प्रकुर्वता ॥४८॥ सोमाधारः पितृगणो योगाधारस्तु चन्द्रमाः ॥ श्राद्धं योगनियुक्तं तु तस्माद्विप्रेन्द्र शस्यते
॥ ४९ ॥ सहस्रस्यापि विप्राणां योगी चेत्पुरतः स्थितः ॥ सर्वान् भोक्तृंस्तारयाति यजमानं तथा द्विज ॥ ५० ॥ इयं सर्वपुराणेषु सामान्या
पैतृकी क्रिया ॥ एतत्क्रमात्कर्मकाण्डं ज्ञात्वा मुच्येत बन्धनात् ॥ ५१ ॥ एतदाश्रित्य निर्वाणमृषयः शंसितव्रताः ॥ प्राप्ता गौरमुखादाशु
त्वमप्येतत्परो भव ॥ ५२॥ इति ते कथितं भक्त्या पृच्छतो द्विजसत्तम ॥ पितॄन्यष्ट्वा हरिं ध्यायेद्यस्तस्य किमतः परम् ॥ नं तस्मात्परतः
पितृतन्त्रमस्तीति निश्चयः ॥ ५३ ॥ इतिश्रीवराहपुराणे आदिकृतवृत्तान्ते श्राद्धकल्पनिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ इति श्राद्ध
कल्पस्समाप्तः ॥ अथ गौरमुखस्य दशावतारस्तोत्रेण मोक्षः ॥ धरण्युवाच ॥ एवं श्राद्धविधिं श्रुत्वा मार्कण्डेयान्महामुनिः ॥ तदा गौरमुखो
देवः किमूर्ध्वं कृतवानसौ ॥ १ ॥ वराह उवाच ॥ एतच्छ्रुत्वा तदा धात्रि पितृतन्त्रं महामुनिः ॥ तत्स्मारितो जन्मशतं मार्कण्डेयेन
धीमता ॥ २ ॥ धरण्युवाच ॥ भवन् गौरमुखः कोऽसावन्यजन्मानि कः स्मृतः ॥ कथं च स्मृतवान् स्मृत्वा किं चकार च सत्तमः ॥ ३॥
वराह उवाच ॥ भृगुरासीत्स्वयं साक्षादन्यस्मिन् ब्रह्मजन्मानि ॥ तदन्वयात्मजस्त्वेष मार्कण्डेयो महामुनिः ॥ ४ ॥ पुत्रैस्तु बोधिता
पूर्वं सुगतिं प्रापयेति यत् ॥ प्रागुक्तं ब्रह्मणा तेन मार्कण्डेयेन बोधितः ॥ ५ ॥ सस्मार सर्वजन्मानि स्मृत्वा चैव तु यत्कृतम् ॥
तच्छृणुष्व वरारोहे कथयामि समासतः ॥ ६ ॥ एवं श्राद्धविधानेन द्वादशाब्दं ततः पितॄन् ॥ इष्ट्वा पश्चाद्धरेः स्तोत्रं स मुनिस्तू
पचक्रमे ॥७॥ प्रभासं नाम यत्तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ तत्र दैत्यान्तकं देवं स्तोतुं गौरमुखः स्थितः ॥८॥ गौरमुख उवाच ॥ दशावतार
स्तोत्रम् ॥ स्तोष्ये महेन्द्रं रिपुदर्पहं शिवं नारायणं ब्रह्मविदां वरिष्ठम् ॥ आदित्यचन्द्राश्वियुगस्थमाद्यं पुरातनं दैत्यहरं सदा हरिम् ॥ ९॥ चकार

मात्स्यं वपुरात्मनो यः पुरातनं वेदविनाशकाले ॥ महामहीभृद्वपुरग्रपृच्छच्छद्महवार्चिः सुरशत्रुहा यः ॥ १० ॥ तथाब्धिमन्थानकृते गिरीन्द्रं
दधार यः कौर्म्मवपुः पुराणम् ॥ हितेच्छयातः पुरुषः पुराणः प्रपातु मां दैत्यहरः सुरेशः ॥ ११ ॥ महावराहः सततं पृथिव्यास्तलात्तलं
प्राविशद्यो महात्मा ॥ यज्ञाङ्गसंज्ञः सुरसिद्धसङ्घैः स पातु मां दैत्यहरः पुराणः॥ १२॥ नृसिंहरूपी च बभूव योऽसौ युगेयुगे योगिवरोथ भीमः ॥
करालवक्त्रः कनकाग्रवर्चा वराशयोऽस्मानसुरान्तकोऽव्यात् ॥ १३ ॥ बलेर्मखध्वंसकृदप्रमेयो योगात्मको योगवपुःस्वरूपः ॥ स दण्डकाष्ठा
जिनलक्षणः क्षितिं योऽसौ महान्कान्तवान्नः पुनातु ॥ १४ ॥ त्रिःसप्तकृत्वो जगतीं जिगाय कृत्वा ददौ कश्यपाय प्रचण्डः ॥ स जामदग्न्योऽ
भिजनस्य गोप्ता हिरण्यगर्भोऽसुरहा प्रपातु ॥ १५॥ चतुष्प्रकारं च वपुर्य आद्यं हैरण्यगर्भप्रतिमानलक्ष्यम् . ॥ रामादिरूपैर्बहुरूपभेदं चकार
सोऽस्मानसुरान्तकोऽव्यात् ॥ १६ ॥ चाणूरकंसासुरदर्पभीतेर्भीतामराणामभयाय देवः ॥ युगे युगे वासुदेवो बभूव कल्पे भवत्यद्भुतरूप
कारी ॥१७॥ युगे युगे कल्किनाम्ना महात्मा वर्णस्थितिं कर्त्तुमनेकरूपः ॥ सनातनो ब्रह्ममयः पुरातनो न यस्य रूपं सुरसिद्धदैत्याः ॥ १८ ॥
पश्यन्ति विज्ञानगतिं विहाय अतो यमेनापि समर्च्चयन्ति ॥ मत्स्यादिरूपाणि चराणि सोऽव्यात् ॥ १९ ॥ नमोनमस्ते पुरुषोत्तमाय पुनश्च
भूयोऽपि नमो नमस्ते ॥ नमोनमः कारणकारणाय नयस्व मां मुक्तिपदं नमस्ते ॥ २० ॥ एवं नमस्यतस्तस्य महर्षेर्भावितात्मनः ॥
प्रत्यक्षताङ्गतो देवः स्वयं चक्रगदाधरः ॥ २१ ॥ तं दृष्ट्वा तस्य विज्ञान निस्तरङ्गं स्वदेहतः ॥ उत्तस्थौ सोऽपि तं लब्ध्वा तस्मिन् ब्रह्मणि
शाश्वते ॥२२॥ लयं जगाम देवात्मन्यपुनर्भवसंज्ञिते ॥ २३॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते गौरमुखस्य मोक्षनिरूपणं नाम पंचदशोऽ
ध्यायः ॥ १५ ॥ अथ सरमोपाख्यानम् ॥ धरण्युवाच ॥ तदा दुर्वाससा शप्तो देवराजः शतक्रतुः ॥ वासिष्यासि त्वं मर्त्त्येषु सुप्रतीक
सुतेन तु ॥ १ ॥ उत्सादितो दिवो मूढेत्येवमुक्तस्तु भूधरः ॥ इन्द्रो मर्त्त्यमुपागम्य सर्वदेवसमान्वितः ॥ २ ॥ किं चकार च तस्मिंस्तु ॥१९॥
दुर्ज्जये च निपातिते ॥ परमेष्ठिना भगवता तेन योगविदुत्तमौ ॥ ३ ॥ स्वर्गे विद्युत्सुविद्युच्च तौ च किं चक्रतुस्तदा ॥ एतन्मे संशयं देव
कथयस्व प्रसादतः ॥ ४ ॥ वराह उवाच ॥ दुर्ज्जयेन जितो धात्रि देवराजः शतक्रतुः ॥ भारते हि तदा वर्षे वाराणस्यां तु पूर्वतः ॥ ५ ॥

आश्रित्य संस्थितौ देवैः सह यक्षमहोरगैः ॥ विद्युत्सुविद्युच्च तदा योगमास्थाय शोभने ॥ ६ ॥ दीर्घतापज्वरं वायुकर्म्मयोगेन संश्रितौ ॥
लोकपालाय तं कृत्स्नं चक्रतुर्योगमायया ॥७॥ तं दुर्जयं मृतं श्रुत्वा समुद्भ्रान्तः स्थितं सदा ॥ आनयि च तुरङ्गं तु देवान्प्राति विजग्मतुः ॥८॥
आगत्य तौ तदा दैत्यौ महासैन्येन पर्वतम् ॥ हिमवन्तं समाश्रित्य संस्थितौ तु बभूवतुः ॥ ९ ॥ देवा अपि महत्सैन्यं संहत्य कृतदंशिताः ॥
मन्त्रयाञ्चक्रुरव्यग्रा ऐन्द्रं पदमभीप्सवः ॥ १० ॥ अब्रवीत्तत्र देवानां गुरुराङ्गिरसो मुनिः ॥ गोमेधेन यजध्वं वै प्रथमं तदनन्तरम् ॥ ११ ॥
यष्टव्यं क्रतुभिः सर्वैरेषा स्थितिरथामराः ॥ उपदेशो मया दत्तः क्रियतां शीघ्र एष वै ॥ १२ ॥ एवमुक्तास्तदा देवा गाः पशूंश्चानु कल्प्य
ते ॥ मुमुचुश्चारणार्थाय रक्षार्थं सरमां ददुः ॥ १३ ॥ ताश्च गावो देवशुन्या रक्ष्यमाणा धराधरे ॥ तत्र जग्मुस्तदा गावश्चरन्त्यो यत्र तेऽ
सुराः ॥ १४ ॥ ते च गावस्तु ता दृष्ट्वा शुक्रमूचुः पुरोहितम् ॥ पश्य त्वं देव गा ब्रह्मंश्चार्यन्ते रक्षमाणया ॥ देवशुन्या सरमया वद किं क्रिय
तेऽधुना ॥ १५ ॥ एवमुक्तस्तदा शुक्रः प्रत्युवाचासुरांस्तदा ॥ एता गा ह्रियतां शीघ्रमसुरा मा विलम्बथ ॥ १६ ॥ एवमुक्तास्तदा दैत्या
जहुस्ता गा यदृच्छया ॥ हृतासु तासु सरमा मार्गान्वेषणतत्परा ॥ १७ ॥ अपश्यत्सा दितेः पुत्रैर्नीता गावो धराधरे ॥ दैत्यैरपि शुनी दृष्टा
दृष्टमार्गा विशेषतः ॥ १८ ॥ दृष्ट्वा ते तां च सरमां सामपूर्वमिदं वचः ॥ आसां गवां तु दुग्ध्वैवं क्षीरं त्वं सरमे शुभे ॥ १९ ॥ पिब स्वैरमिति
प्रोक्ता तस्यै तददुरञ्जसा ॥ दत्तञ्च तु क्षीरपानं तु तस्यै ते दैत्यनायकाः ॥ २० ॥ मा भद्रे देवराजाय गास्त्विमा विनिवेदय ॥ एवमुक्ता
ततो दैत्या मुमुचुस्तां शुनीं वने ॥ २१ ॥ तैर्मुक्ता सा सुरांस्तूर्णं जगाम खलु क्षपती ॥ नमश्चक्रे च देवेन्द्रं सरमा सुरसत्तमम् ॥ २२ ॥
तस्याश्च मरुतो देवा देवेन्द्रेण निरूपिताः ॥ गूढं गच्छत रक्षार्थं देवशुन्या महाबलाः ॥ २३ ॥ इत्युक्तास्तेन सूक्ष्मेण वपुषा जग्मुरञ्जसा ॥
तेऽप्यागम्य सुरेन्द्राय नमश्चक्रुर्धराधरे ॥ २४ ॥ तान्देवराजः पप्रच्छ गावः किं सरमेऽभवन् ॥ एवमुक्ता तु सरमा न जानामीति चाब्र
वीत् ॥ २५ ॥ तत इन्द्रो रुषा युक्तो यज्ञार्थमुपकल्पिताः ॥ गावः क्व चेति मरुतः प्रोवाचेदं शुनी कथम् ॥ २६ ॥ एवमुक्तास्तु मरुतो देवे
न्द्रेण धराधरे ॥ कथयामासुरव्यग्राः कर्म्म तत्सरमाकृतम् ॥ २७ ॥ तत इन्द्रः समुत्थाय पदा सन्ताडयच्छुनीम् ॥ क्रोधेन महताविष्टो देवेन्द्रः

पाकशासनः ॥ २८ ॥ क्षीरं पीतं त्वया मूढे गावस्ताश्चासुरैर्हृताः ॥ एवमुक्ता पदा तेन ताडिता सरमा धरे ॥ २९ ॥ तस्येन्द्रपादघातेन
क्षीरं वक्त्रात्प्रसुस्रुवे ॥ स्रवता तेन पयसा सा शुनी यत्र गाभवत् ॥ ३० ॥ जगाम तत्र देवेन्द्रः सहसैन्यस्तदा धरे ॥ अपश्यत्तत्र देवेन्द्रस्ता
गा दैत्यैरुपाहृताः ॥ ३१ ॥ चक्रुर्ये पालनं दैत्यास्ते दैत्या बलिनो भृशम् ॥ तैः सैन्यैर्निहताः सद्यस्तत्यजुर्गाः स्वमूर्त्तिभिः ॥ ३२ ॥
सामन्तैश्च सुरेन्द्रोऽथ वृतः परमहर्षितैः ॥ ताश्च लब्ध्वा महेन्द्रस्तु मुदा परमया युतः ॥ ३३ ॥ चकार यज्ञान्विविधान् सहस्रानपि
स प्रभुः ॥ क्रियमाणैस्ततो यज्ञैर्ववृधेन्द्रस्य तद्बलम् ॥ ३४ ॥ वर्द्धितेन बलेनेन्द्रो देवसैन्यमुवाच ह ॥ सन्नह्यंतां सुराः शीघ्रं दैत्यानां
वधकर्म्मणि ॥ ३५ ॥ एवमुक्तास्तदा देवाः सन्नद्धास्तत्क्षणेऽभवन् ॥ असुराणामभावाय जग्मुर्देवाः सवासवाः ॥ ३६ ॥ गत्वा तु
युयुधुस्तूर्णं विजिग्युस्त्वासुरीं चमूम् ॥ जिताश्च देवैरसुरा हतशेषा धराधरे ॥ ३७ ॥ ममज्जुः सागरजले भयत्रस्ता विचेतसः ॥ देवराजोऽपि
त्रिदिवं लोकपालैः समं धरे ॥ ३८ ॥ आरुह्य बुभुजे प्राग्वत्सदेवो देवराड्विभुः ॥ य एवं शृणुयान्नित्यं सरमाख्यानमुत्तमम् ॥ ३९ ॥ स गोमेधस्य
यज्ञस्य फलं प्राप्नोति मानवः ॥ भ्रष्टराज्यश्च यो राजा शृणोतीदं समाहितः ॥ ४० ॥ स देवेन्द्र इव स्वर्गं राज्यं स्वं लभते नरः ॥ इतिश्री वराहपुराणे
आदिकृतवृत्तान्ते सरमोपाख्यानं नाम षोडशोऽध्यायः ॥ १६ ॥ अथ महातप उपाख्यानम् ॥ धरण्युवाच ॥ ये ते मणौ तदा देव उत्पन्ना नर
पुङ्गवाः ॥ तेषां वरो भगवता दत्तस्त्रेतायुगे किल ॥ १ ॥ राजानो भवितारो वै कथं तेषां समुद्भवः ॥ किं चक्रुर्वै हि ते कर्म्म पृथङ् नामानि शंस
मे ॥ २ ॥ वराह उवाच ॥ सुप्रभो मणिजो यस्तु राजा नाम महामनाः ॥ तस्योत्पत्तिं वरारोहे शृणु त्वं भूतधारिणि ॥ ३ ॥ आसीद्राजा महा
बाहुरादौ कृतयुगे पुरा ॥ श्रुतकीर्तिरिति ख्यातस्त्रैलोक्ये बलवत्तरः ॥ ४ ॥ तस्य पुत्रत्वमापेदे सुप्रभो मणिजो धरे ॥ प्रजापालेति वै नाम्ना श्रुत
कीर्तेर्महाबलः ॥ ५ ॥ स एकस्मिन्दिने प्रायाद्गहनं श्वापदाकुलम् ॥ तत्रापश्यदृषेर्द्धन्यं महदाश्रममण्डलम् ॥ ६ ॥ तस्मिन्महातपा नाम ऋषिः
परमधार्मिकः ॥ तपस्तेपे निराहारो जपन्ब्रह्म सनातनम् ॥ ७ ॥ तत्रासौ पार्थिवः श्रीमान्प्रवेशाय मतिं तदा ॥ चकार चाविशद्राजा प्रजापालो
महातपाः ॥ ८ ॥ तस्मिन्वराश्रमपदे वनवृक्षजात्या धराप्रसूतोर्जितमार्गजुष्टाः ॥ लतागृहा इन्दुसमप्रकाशिनो नायासज्ञा यत्र याता हि

भृङ्गाः ॥९॥ सुरक्तपद्मोदरकोमलाग्रनखाङ्गुलीभिः प्रसृतैः सुरागाम् ॥ वराङ्गनाभिः पदपंक्तिमुच्चैर्विहाय भूमिं त्वपि वृत्रशत्रोः ॥ १०॥ क्वचित्
समीपे तमतीव हृष्टैर्नानाद्विजैः षट्चरणैश्च मत्तैः ॥ वाशद्भिरुच्चैर्विविधप्रमाणाः शाखाः सुपुष्पाः समयोगयुक्ताः ॥११॥ कदम्बनीपार्ज्जुनशील
शालभृता गृहस्थैर्मधुरस्वरेण ॥ जुष्टा विहङ्गैः सुजनप्रयोगा निराकुला कार्यधृतिर्यथास्थैः ॥ १२ ॥ मखाग्निधूमैरुदिताग्निहोमैस्ततः समन्ता
द्द्रुमेधिभिर्द्विजैः ॥ सिंहैरिवाधर्म्मकरी विदारितः सुतीक्ष्णदंष्ट्रैरमत्तकेसरैः ॥ १२ ॥ एवं स राजा विविधानुपायान्वराश्रमे प्रेक्षमाणो विवेश॥
तस्मिन्प्रविष्टे तु स तीव्रतेजा महातपाः पुण्यकृतां प्रधानः ॥ १४ ॥ दृष्टो यथा भानुरनन्तभानुः कौशातने ब्रह्मविदां प्रधानः ॥ दृष्ट्वा स
राजा विजये मृगाणां मतिं विसस्मार मुनेः प्रसङ्गात् ॥ १५ ॥ चकार धर्मं प्रति मानसं सो ह्यनुत्तमं चाप्रतिमं मुनिः सः ॥ स मुनिस्तं नृपं
दृष्ट्वा प्रजापालमकल्मषम् ॥ अभ्यागतक्रियां चक्रे आसनस्वागतादिभिः ॥ १६ ॥ ततः कृतासनो राजा प्रणम्य ऋषिपुङ्गवम् ॥ पप्रच्छ
वसुधे प्रश्नमिमं परमदुर्लभम् ॥ १७॥ भगवन्दुःखसंसारमग्नैः पुम्भिर्जिगीषुभिः ॥ यत्कार्यं तन्ममाचक्ष्व प्रणते शंसितव्रत ॥ १८ ॥ महातपा
उवाच ॥ संसारार्णवमज्जमानमनुजैः प्रोतः स्थिरोऽतिध्रुवः कार्यः पूजनहोमदानविधिभिर्यज्ञैः समं ध्यानकैः ॥ कीलैः कीलितमोक्षकैः सुरभटै
रूर्ध्वे महारज्जुभिः प्राणाद्यैरधुना कुरुष्व नृपते पोतं त्रिलोकेश्वरम् ॥ १९ ॥ नारायणं नरकहरं सुरेशं भक्त्या नमस्कुर्वति यो नृपेश ॥ स
वीतशोकः परमं विशोकं प्राप्नोति विष्णोः पदमव्ययं यत् ॥ २० ॥ नृप उवाच ॥ भगवन्सर्वधर्मज्ञ कथं विष्णुः सनातनः ॥ पूज्यते
मोक्षमिच्छद्भिः पुरुषैर्वद तत्त्वतः॥२१॥महातपा उवाच ॥ शृणु राजन् महाप्राज्ञ यथा विष्णुः प्रसीदति ॥ पुरुषाणां तथा स्त्रीणां सर्वयोगीश्वरो
हरिः ॥२२॥ सर्वे देवाः सपितरो ब्रह्माद्याश्चाण्डमध्यगाः ॥ विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः ॥२३ ॥ अग्निस्तथाश्विनौ गौरीगज
वक्त्रभुजङ्गमाः ॥ कार्त्तिकेयस्तथादित्या मातरो दुर्गया सह ॥२४॥ दिशो धनपतिर्विष्णुर्यमो रुद्रः शशी तथा॥पितरश्चैव सम्भूताः प्राधान्येन
जगत्पतेः॥२५॥ हिरण्यगर्भस्य तनौ सर्वे एव समुद्भवाः ॥ पृथक्पृथक्ततो गर्वं वहमानाः समन्ततः ॥२६॥ अहं याज्यस्त्वहं याज्य इति तेषां
स्वनो महान् ॥ श्रूयते देवसमितौ क्षुब्धसागरसन्निभः॥२७॥तेषां विवदमानानां वह्निरुत्थाय पार्थिव॥उवाच मां यजस्वेति ध्याय त्वं मामिति

ब्रुवन्॥२८॥ प्राजापत्यमिदं नूनं शरीरं मद्विना कृतम् ॥ विनाशमुपपद्येत यतो नायं महानहम् ॥ २९ ॥ एवमुक्त्वा शरीरं तु त्यक्त्वा बहि
र्विनिर्ययौ ॥ निर्गतेऽपि ततस्तस्मिंस्तच्छरीरं न शीर्यते ॥ ३० ॥ ततोऽश्विनौ मूर्त्तिमन्तौ प्राणापानशरीरगौ ॥ आवां प्रधानावित्येवमूचतु
र्याज्यमुत्तरौ॥३१॥एवमुक्त्वा शरीरं तु विहाय क्वचिदास्थितौ॥तयोरपि क्षयं कृत्वा क्षीणं तत्पुरमास्थितम् ॥३२॥ ततो वागब्रवीद्गौरी प्राधान्यं
मयि संस्थितम् ॥ साप्येवमुक्त्वा क्षेत्रात्तु निश्चक्राम बहिः शुभा ॥ ३३ ॥ तया विनापि तत्क्षेत्रं वागूनं व्यवतिष्ठत ॥ ततो गणपतिर्वाक्य
माकाशाख्योऽब्रवीत्तदा ॥३४॥ न मया रहितं किञ्चिच्छरीरं स्थायि दूरतः ॥ कालान्तरेत्येवमुक्त्वा सोऽपि निष्क्रम्य देहतः ॥३५॥ पृथग्भूत
स्तथाप्येतच्छरीरं नाप्यनीनशत् ॥ विनाशाख्यं च तत्तेन तथापि न विशीर्यते ॥ ३६ ॥ सुषिरैस्तु विहीनं तु दृष्ट्वा क्षेत्रं व्यवास्थितम् ॥
शरीरधातवः सर्वे ते ब्रूयुर्वाक्यमेव हि॥३७॥ अस्माभिर्व्यतिरिक्तस्य न शरीरस्य धारणम्॥भवतीत्येवमुक्त्वा ते जहुः सर्वे शरीरिणः ॥३८॥
तैर्व्यपेतमपि क्षेत्रं पुरुषेण प्रपाल्यते ॥ तं दृष्ट्वा त्वब्रवीत्स्कन्दः सोऽहङ्कारः प्रकीर्तितः ॥ ३९॥ मया विना शरीरस्य सम्भूतिरपि नेष्यते ॥
एवमुक्त्वा शरीरात्तु स व्यपेतः पृथक् स्थितः ॥ ४० ॥ तेनाक्षतेन तत्क्षेत्रं विना मुक्तवदास्थितम् ॥ तं दृष्ट्वा कुपितो भानुः स आदित्यः
प्रकीर्तितः ॥ ४१ ॥ मया विना कथं क्षेत्रमिमं क्षणमपीष्यते ॥ एवमुक्त्वाथ यातः स तच्छरीरं न शीर्यते ॥ ४२ ॥ ततः
कामादिरुत्थाय गणो मातृविसंज्ञितः ॥ न मया व्यतिरिक्तस्य शरीरस्य व्यवस्थितिः ॥ ४३ ॥ एवमुक्त्वा स यातस्तु शरीरं तन्न शीर्यते ॥
ततो मायाब्रवीत्कोपात्सा च दुर्गा प्रकीर्त्तिता ॥ ४४ ॥ न मयास्य विना भूतिरित्युक्त्वान्तर्दधे पुनः ॥ ततो दिशः समुत्तस्थुरूचुश्चेदं वचो
महत् ॥ ४५ ॥ नास्माभी रहितं कार्यं भवतीति न संशयः ॥ चतस्र आगताः काष्ठास्ताः प्रयाताः क्षणात्तदा ॥ ४६ ॥ ततो धनपतिर्वायु
र्मध्यतस्त्यक्तसम्भवः ॥ शरीरस्येति सोऽप्येवमुक्त्वा मूर्द्धनि सोऽभवत् ॥ ४७ ॥ ततो विष्णोर्मनो ब्रूयान्नायं देहो मया विना ॥ क्षणमप्यु
त्सहेत्स्थातुमित्युक्त्वान्तर्दधे पुनः ॥ ४८ ॥ ततो धर्मोऽब्रवीत्सर्वमिदं पालितवाहनम् ॥ इदानीं मय्यपगते कथमेतद्भविष्याति ॥ ४९ ॥
एवमुक्त्वा गतो धर्मस्तच्छरीरं न शीर्यते ॥ ततोऽब्रवीन्महादेवः अव्यक्तो भूतभावनः ॥ ५० ॥ महासंज्ञो मया हीनं शरीरं नो भवेद्यथा ॥

एवमुक्त्वा गतः शम्भुस्तच्छरीरं न शीर्यते ॥ ५१ ॥ तद्दृष्ट्वा पितरश्चोचुस्तन्मात्रं यावदस्माभिः ॥ प्राणान्तरेभिरेतच्च शरीरं शीर्यते
ध्रुवम् ॥ ५२ ॥ एवमुक्त्वा तु तद्देहं त्यक्त्वान्तर्द्धानमागताः ॥ अग्निः प्राण अपानश्च आकाशं चैव धातवः ॥ ५३ ॥ क्षेत्रं तद्वदहंकारो
भानुः कामादयो मया ॥ काष्ठा वायुर्विष्णुधर्मौ शम्भुश्चेवेन्द्रियार्थकाः ॥५४ ॥ एतैर्मुक्तं तु तत्क्षेत्रं मुक्ताविव तु संस्थितम् ॥ सोमेन पाल्य
मानं तु पुरुषेणेन्दुरूपिणा ॥ ५५ ॥ एवं व्यवस्थिते सोमे षोडशात्मन्यथाक्षरे ॥ प्रागवत्तत्र गुणोपेतं क्षेत्रमुत्थाय बभ्रम ॥ ५६ ॥ प्रागवस्थं
शरीरं तु दृष्ट्वा सर्वज्ञपालितम् ॥ताः क्षेत्रदेवताः सर्वा वैलक्षं भावमास्थिताः॥५७॥ तमेवं तुष्टुवुः सर्वास्तं देवं परमेश्वरम् ॥ स्वस्थानं विविशुः
सर्वास्तदा नृपतिसत्तम ॥५८॥ त्वमग्निस्त्वं तथा प्राणस्त्वमपानः सरस्वती ॥ त्वमाकाशं धनाध्यक्षस्त्वं शरीरस्य धातवः ॥५९ ॥ अहंकारो
भवान्देव त्वमादित्योऽष्टको गणः ॥ त्वं माया पृथिवी दुर्गा त्वं दिशस्त्वं मरुत्पतिः॥ ६० ॥ त्वं विष्णुस्त्वं तथा धर्मस्त्वं जिष्णुस्त्वं पराजितः ॥
अक्षरार्थस्वरूपेण परमेश्वरसंज्ञितः ॥ अस्माभिरपयातैस्तु कथमेतद्भविष्यति ॥ ६१॥ एवमत्र शरीरं तु त्यक्तमस्माभिरेव च ॥ न परं भवतो
देव तदत्र त्वं च पालयेः ॥ ६२ ॥ स्थानभङ्गो न नः कार्यः स्वयं सृष्ट्वा प्रजापते ॥ एवं स्तुतस्ततो देवस्तेषां तोषं परं ययौ ॥ ६३ ॥
उवाच चैतान्क्रीडार्थं भवन्तोत्पादिता मया ॥ कृतकृत्यस्य चैकं तु भवद्भिर्मे प्रयोजनम् ॥ ६४ ॥ तथा चेदप्रियं रूपे द्वे द्वे प्रत्येकशोऽ
धुना ॥ भूतकार्येष्वमूर्तेन देवलोके तु मूर्तिना ॥ ६५ ॥ तिष्ठध्वमपि कालान्ते लयं त्वाविशत द्रुतम् ॥ शरीराणि पुनर्नैव कर्त्तव्योऽहमिति
क्वचित् ॥ ६६ ॥ मूर्त्तीनां च तथा तुभ्यमग्निनामानि वोऽधुना ॥ अग्निर्वैश्वानरो नाम प्राणापानौ तथाश्विनौ ॥ ६७ ॥ भविष्यति तथा
गौरी हिमशैलसुता तथा ॥ पृथव्यादिगुणस्त्वेष गजवक्त्रो भविष्यति ॥ ६८ ॥ शरीरधातवश्चेमे नानाभूतानि चैव तु ॥ अहंकारस्तथा स्कन्दः
कार्त्तिकेयो भविष्यति ॥ ६९ ॥ शरीरमाया दुर्गैषा कारणान्ते भविष्यति ॥ दश कन्या भविष्यन्ति काष्ठास्त्वेतास्तु वारुणाः ॥ ७० ॥
अयं वायुर्द्धनेशस्तु कारणं ते भविष्यति ॥ अयं मनो विष्णुनामा भविष्यति न संशयः ॥ ७१ ॥ धर्मोऽपि यमनामा च भविष्यति न
संशयः ॥ महत्तत्त्वं च भगवान्महादेवो भविष्यति ॥ ७२ ॥ इन्द्रियार्थाश्च पितरो भविष्यंति न संशयः ॥ अयं सोमः पुरा भूत्वा जामित्रं

सर्वेंद्रामराः ॥७३॥ एवं वेदान्तपुरुषः प्रोक्तो नारायणात्मकः ॥ स्वस्थाने देवताः सर्वा देवस्तु विरराम ह ॥ ७४ ॥ एवंप्रभावो देवोऽसौ वेद
वेद्यो जनार्दनः ॥ कथितो नृपते तुभ्यं किमन्यच्छ्रोतुमिच्छसि ॥ ७५ ॥ इतिश्रीवराहपुराणे आदिकृतवृत्तान्ते महातप उपाख्याने सप्तदशो
ध्यायः ॥ १७ ॥ अथाग्न्युत्पत्तिवर्णनम् ॥ प्रजापाल उवाच ॥ कथमग्नेः समुत्पत्तिरश्विनोर्वा महामुने ॥ गौर्या गणपतेर्वापि नागानां वा
गुहस्य च ॥ १ ॥ आदित्यचन्द्रमातॄणां दुर्गाया वा दिशां तथा ॥ धनदस्य च विष्णोर्वा धर्मस्य परमेष्ठिनः ॥ २ ॥ शम्भोर्वापि पितॄणां च
तथा चन्द्रमसो मुने ॥ शरीरदेवताः सर्वाः कथं मूर्तित्वमागताः ॥ ३ ॥ किंच तासां मुने भोज्यं का वा संज्ञा तिथिश्च का ॥ यस्यां दृष्ट्वा
त्वमी पुंसां फलं यच्छन्त्यनामयम् ॥ ४ ॥ एतन्मे सरहस्यं तु मुने त्वं वक्तुमर्हसि ॥ महातपा उवाच ॥ योगसाध्यस्वरूपेण आत्मा नारायणा
त्मकः ॥ ५ ॥ सर्वज्ञः क्रीडतस्तस्य भोगेच्छा चात्मनात्मनि ॥ क्षोभितेऽस्मिन्महाभूते एतत्सर्वं तदद्भुतम् ॥ ६ ॥ तमद्य प्रीतिमत्तोऽयं
विकारं समरोचयत् ॥ विकुर्वतस्तस्य तदा महानग्निः समुत्थितः ॥ ७ ॥ कोटिज्वालापरीवारः शब्दशब्दहनात्मकः ॥ असावप्यतितेजस्वी
विकारं समरोचयत् ॥ ८ ॥ विकुर्वतो बभौ वह्नेर्वायुः परमदारुणः ॥ तस्मादपि विकारस्थादाकाशं समपद्यत ॥ ९ ॥ तच्छब्दलक्षणं व्योम
स च वायुः प्रतापवान् ॥ तच्च तेजोऽम्भसा युक्तं श्लिष्टमन्योन्यतस्तथा ॥ १० ॥ तेजसा शोषितं तोयं वायुना उग्रगामिना ॥ बोधितेन तथा
व्योममार्गं दत्ते तु तत्क्षणात् ॥ ११ ॥ पिण्डीभूतं तथा सर्वं काठिन्यं समपद्यत ॥ सेयं पृथ्वी महाभाग तेषां वृद्धेतराभवत् ॥ १२ ॥ चतुर्णां
योगकाठिन्यादेकैकगुणवृद्धितः ॥ पृथ्वी पंचगुणा ज्ञेया तेऽप्येतस्यां व्यवस्थिताः ॥ १३ ॥ स च काठिन्यकं कुर्वन्ब्रह्मांण्डं समपद्यत ॥ तस्मि
न्नारायणो देवश्चतुर्मूर्तिश्चतुर्भुजः ॥ १४ ॥ प्राजापत्येन रूपेण सिसृक्षुर्विविधाः प्रजाः ॥ चिन्तयन्नाधिगच्छेत्तु सृष्टिं लोकपितामहः ॥ १५ ॥
ततोऽस्य सुमहान् कोपो जज्ञे परमदारुणः ॥ तस्मात्कोपात्सहस्रार्चिरुत्तस्थौ दहनात्मकः ॥ १६ ॥ स तं दिधक्षुर्ब्रह्माणं ब्रह्मणोक्तस्तदा
नृप ॥ हव्यं कव्यं वहस्वेति ततोऽसौ हव्यवाहनः ॥ १७ ॥ ब्रह्माणं क्षुधित प्रायात्किङ्करोमि प्रशाधि माम् ॥ स ब्रह्मा प्रत्युवाचैनं
त्रिधा तृप्तिमवाप्स्यसि ॥ १८ ॥ दत्तासु दक्षिणास्वादौ तृप्तिर्भूत्वा यतोऽमरान् ॥ नयसे दाक्षिणाभागं दाक्षिणाग्निस्ततोऽ

भवत् ॥ १९ ॥ आ समन्ताद्धुतं किंचिद्यत्त्रिलोके विभावसो ॥ तद्वहस्व सुरार्थाय ततस्त्वं हव्यवाहनः ॥ २० ॥ गृहं शरीरमित्युक्तं तत्पतिस्त्वं यतोऽधुना ॥ अतो वै गार्हपत्यस्त्वं भव सर्वगतो विभो ॥ २१ ॥ विश्वान्नरान् हुतो येन नयसे सद्गतिं प्रभो ॥ अतो वैश्वानरो नाम तव सत्यं भविष्यति ॥ २२ ॥ द्रविणं बलमित्युक्तं धनं च द्रविणं ततः ॥ ददाति तद्भवानेव द्रविणोदास्ततो ऽभवत् ॥ २३ ॥ पापस्तिरोभवेन्नित्यं निःशब्दो निश्चयात्मकः ॥ अतस्त्वं सर्वगत्वाच्च तेजोऽग्निस्ते भविष्यति ॥२४ ॥ ध्मापूरण शब्दो य इध्मानामपि कीर्त्यते ॥ पूरितस्य गतिर्येन तेनेध्मस्त्वं भविष्यसि ॥ २५ ॥ यान्यान्येतानि नामानि तव पुत्र महामखे ॥ यजन्तस्त्वां नराः कामैस्तर्पयिष्यन्त्यसंशयम् ॥ २६ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्यानेऽग्न्युत्पत्तिर्नामाष्टादशोऽध्यायः ॥ १८ ॥ अथा ग्निप्राशस्त्यम्॥ महातपा उवाच॥ विष्णोर्विभूतिमाहात्म्यं कथितं ते प्रसङ्गतः ॥ तिथीनां शृणु माहात्म्यं कथ्यमानं मया नृप ॥ १ ॥ इत्थम्भूतो महानग्निर्ब्रह्मक्रोधसमुद्भवः ॥ उवाच देवं ब्रह्माणं तिथिर्मे दीयतां विभो ॥ यस्यामहं समस्तस्य जगतः ख्यातिमाप्नुयाम् ॥ २ ॥ ब्रह्मोवाच ॥ देवानामथ यक्षाणां गंधर्वाणां च सत्तम ॥ आदौ प्रतिपदा येन त्वमुत्पन्नोऽसि पावक ॥ ३ ॥ त्वत्पदात्प्रातिपदिकं सम्भविष्यन्ति देवताः ॥ अतस्ते प्रतिपन्नाम तिथिरेषा भविष्यति ॥ ४ ॥ तस्यां तिथौ हविष्येण प्राजापत्येन मूर्तिना ॥ होष्यन्ति तेषां प्रीताः स्युः पितरः सर्वे देवताः ॥ ५ ॥ चतुर्विधानि भूतानि मनुष्याः पशवोऽसुराः ॥ देवाः सर्वे सगन्धर्वाः प्रीताः स्युस्तर्पितास्त्वयि ॥ ६ ॥ यश्चोपवासं कुर्वीत त्वद्भक्तः प्रतिपादिने ॥ क्षीराशनो वा वर्त्तेत शृणु तस्य फलं महत् ॥ चतुर्युगानि षड्विंशं स्वर्गलोके महीयते ॥ ७ ॥ तेजस्वी रूपसम्पन्नो द्रव्यवान् जायते नरः ॥ इह जन्मन्यसौ राजा प्रेत्य स्वर्गे महीयते॥८॥ तूष्णीम्बभूव सोऽप्यग्निर्ब्रह्मदत्ताश्रमं ययौ॥९॥य इदं शृणुयान्नित्यं प्रातरुत्थाय मानवः ॥ अग्नेर्जन्म स पापेभ्यो मुच्यते नात्र संशयः ॥ १० ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातप उपाख्यानेऽग्निप्राशस्त्यनिरूपणं नामैकोनविंशोऽध्यायः ॥ १९ ॥ अथाश्विनोरुत्पत्तिः ॥ प्रजापाल उवाच ॥ एवमग्नेः समुत्पत्तिर्जाता ब्रह्मन्महात्मनः ॥ प्राणापानौ कथं देवावश्विनौ सम्बभूवतुः ॥ १ ॥ महातपा उवाच ॥ मरीचिर्ब्रह्मणः पुत्रः स्वयं ब्रह्मा द्विसप्तभिः ॥ रूपैर्व्यवस्थितस्तेषां मरीचिः श्रेष्ठता

मगात्॥२॥ तस्य पुत्रो महातेजाः कश्यपो नाम वै मुनिः ॥ स्वयं प्रजापतिः श्रीमान्देवतानां पिताभवत्॥३॥ तस्य पुत्रा बभूवुर्हि आदित्या द्वादश प्रभो ॥ नारायणात्मकं तेजो द्वादशेति प्रकीर्तितम् ॥ ४ ॥ ते च मासास्त आदित्याः स्वयं संवत्सरो हरिः ॥ एवं ते द्वादशादित्या मार्त्तण्डश्च प्रतापवान् ॥ ५ ॥ तस्य त्वष्टा ददौ कन्यां संज्ञां नाम महाप्रभाम् ॥ तस्यापत्यद्वयं जज्ञे यमश्च यमुना तथा ॥ ६ ॥ तस्य तेजोऽप्यसहती बभूवाश्वा मनोजवा ॥ स्वां छायां तत्र संस्थाप्य सा जगामोत्तरान्कुरून् ॥ ७ ॥ तद्रूपां तां सवर्णां तु भेजे मार्त्तण्डभास्करः ॥ तस्मादपि द्वयं जज्ञे शनिं तपतीमेव च ॥८॥ यदा त्वसदृशं भेजे पुत्रान् प्रति नरोत्तमः ॥ छायां प्रोवाच भगवान् क्रोधसंरक्तलोचनः ॥ असमत्वं न कर्त्तव्यं स्वेष्वपत्येषु भामिनि ॥९॥ एवमुक्ता यदा सा तु ह्यसमत्वं व्यरोचत॥ तदा यमः स्वपितरं प्रोवाच भृशदुःखितः॥१०॥ नेयं माता भवेत्तात त्वस्माकं शत्रुवत्सदा ॥ सपत्नीव वृथाचारा स्वेष्वपत्येषु वत्सला ॥ ११ ॥ एवं यमवचः श्रुत्वा सा च्छाया क्रोधमूर्च्छिता ॥ शशाप प्रेतराजस्त्वं भविष्यस्यचिरादिव ॥ १२ ॥ एवं श्रुत्वाथ मार्त्तण्डस्तदा पुत्रहितेच्छया ॥ उवाच मध्यवर्त्ती त्वं भविता धर्मपापयोः ॥ लोकपालश्च भविता त्वं पुत्र दिवि शोभसे ॥ १३ ॥ शनिं शशाप मार्त्तण्डश्छायाकोपप्रधर्षितः ॥ त्वं क्रूरदृष्टिर्भविता मातृदोषेण पुत्रक ॥१४॥ एवमुक्त्वा समुत्थाय ययौ भानुर्दिदृक्षया ॥ तामपश्यत्स साश्वामुत्तरेषु कुरुष्वथ॥१५॥ ततोऽश्वरूपं कृत्वा स गत्वा तत्रोत्तरान् कुरून् ॥ प्राजापत्येन मार्गेण युयोजात्मानमात्मना ॥१६॥ तस्यां त्वाष्ट्र्यामश्वरूप्यां मार्त्तण्डस्तीव्रतेजसा ॥ बीजं निर्वापयामास तज्ज्वलत्तु द्विधापतत् ॥१७॥ तत्र प्राणस्त्वपानश्च योनौ चात्मजितौ पुरा ॥ वरदानेन च पुनर्मूर्त्तिमन्तौ बभूवतुः ॥१८॥ तौ त्वाष्ट्र्यामश्वरूपायां जातौ येन नरोत्तमौ ॥ ततस्तावश्विनौ देवौ कीर्त्त्येते रविनन्दनौ ॥ १९ ॥ प्राजापत्यं स्वयं भानुस्त्वाष्ट्री शक्तिः परापरा ॥ तस्याः प्रागवच्छरीरस्थावमूर्त्तौ मूर्त्तिमाश्रितौ ॥२०॥ ततस्तावश्विनौ देवौ मार्त्तण्डमुपतस्थतुः॥ ऊचतुः स्वरुचिं तावत्किं कर्त्तव्यमथावयोः॥२१॥ मार्त्तण्ड उवाच ॥ पुत्रौ प्रजापतिं देवं भक्त्याराधयतां वरम् ॥ नारायणं स वो दाता वरं नूनमवाप्स्यथः ॥ २२ ॥ एवं तावश्विनौ प्रोक्तौ मार्त्तण्डेन महात्मना ॥ तेपतुस्तीव्रतपसौ तपः परमदुश्चरम् ॥ ब्रह्मपारमयं स्तोत्रं जपन्तौ तु समाहितौ ॥ २३ ॥ तयोः कालेन महता ब्रह्मा नारा

यणात्मकः ॥ तुतोष परमप्रीत्या वरं चैवं ददौ तयोः ॥२४॥ प्रजापाल उवाच ॥ अश्विभ्यामीरितं स्तोत्रं ब्रह्मणो व्यक्तजन्मनः ॥ श्रोतुमिच्छा
म्यहं ब्रह्मंस्त्वत्प्रसादान्महामुने ॥२५॥ महातपा उवाच ॥ शृणु राजन्यथा स्तोत्रमश्विभ्यां ब्रह्मणः कृतम् ॥ ईदृशं च फलं प्राप्तं तयोः स्तोत्रस्य
चानघ ॥ २६ ॥ ॐ नमस्ते निष्क्रिय निष्प्रपञ्च निराश्रय निरपेक्ष निरालम्ब ॥ निर्गुण निरालोक निराधार निर्मम निरालम्ब ॥ २७ ॥
ब्रह्मन्महाब्रह्मन्ब्राह्मणप्रिय पुरुष महापुरुष पुरुषोत्तम ॥ देव महादेव देवोत्तम स्थाणो स्थिति ( त ) स्थापक ॥ २८ ॥ भूत महा
भूत भूताधिपते यक्ष महायक्ष यक्षाधिपत ॥ गुह्य महागुह्य गुह्याधिपते सौम्य महासौम्य सौम्याधिपते ॥ २९ ॥ पक्षिन् महापक्षिपते दैत्य
महादैत्याधिपते ॥ रुद्र महारुद्राधिपते विष्णो महाविष्णुपते ॥ परमेश्वर नारायण प्रजापतये नमः ॥ ३० ॥ एवं स्तुतस्तदा ताभ्यामश्विभ्यां
स प्रजापतिः ॥ तुतोष परमप्रीतया वाक्यं चेदमुवाच ह ॥ ३१ ॥ वरं वरयतां शीघ्रं देवैः परमदुर्लभम् ॥ येन वो वरदानेन
चरतस्त्रिदिवे सुखम् ॥ ३२ ॥ अश्विनावूचतुः ॥ आवयोर्देवभागं तु देहि देव प्रजापते ॥ सोमपत्वं च देवानां सामान्यत्वं च
शाश्वतम् ॥ ३३ ॥ ब्रह्मोवाच ॥ रूपं कान्तिरनौपम्यं भिषक्त्वं सर्ववस्तुषु ॥ सोमपत्वं च लोकेषु सर्वमेतद्भविष्यति ॥ ३४ ॥
महातपा उवाच ॥ एतत्सर्वं द्वितीयायामश्विभ्यां ब्रह्मणा पुरा ॥ दत्तं यस्माद्दस्तेषां तिथीनामुत्तमा तिथिः ॥ ३५ ॥ एतस्यां
रूपकामस्तु पुष्पाहारो भवेन्नरः ॥ संवत्सरं शुचिर्नित्यं सुरूपो भवेन्नरः ॥ ३६ ॥ अश्विनोर्ये गुणाः प्रोक्तास्ते तस्यापि भवन्ति च ॥
य इदं शृणुयान्नित्यमश्विनोर्जन्म चोत्तमम् ॥ सर्वपापविनिर्मुक्तः पुत्रवाञ्जायते नरः ॥ ३७ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातप
उपाख्यानेऽश्विनोरुत्पत्तिर्नाम विंशोऽध्यायः ॥ २० ॥ अथ गौर्युत्पत्तिः ॥ प्रजापाल उवाच ॥ कथं गौरी महाप्राज्ञ संभूता वरदा नतः ॥ मूर्तिं
लब्धवती पुंसः परस्य परमात्मनः ॥ १ ॥ महातपा उवाच ॥ पूर्वं प्रजापतिर्देवः सिसृक्षुर्विविधाः प्रजाः ॥ चिन्तयामास धर्मात्मा यदा ता
नाध्यगच्छत ॥ २ ॥ तदास्य कोपात्समज्ञे स च रुद्रः प्रतापवान् ॥ रोदनात्तस्य रुद्रत्वं सञ्जातं परमेष्ठिनः ॥ ३ ॥ तस्य ब्रह्मा शुभां कन्यां
भार्यार्थे मूर्तिसम्भवाम् ॥ गौरीनाम्नीं स्वयं देवीं भारतीं तां ददौ पिता ॥ रुद्रायामितदेहाय स्वयं ब्रह्मा प्रजापतिः ॥ ४ ॥ स तां लब्ध्वा वरा

रोद्दां मुदा परमया युतः ॥ सर्गकालेषु तं ब्रह्मा तपसा प्रत्युवाच ह ॥ ५ ॥ रुद्र प्रजाः सृजस्वेति पौनःपुन्येन चोदितः ॥ असमर्थोऽहमीति जले न्यमज्जत महाबलः ॥ ६ ॥ तपोऽर्थी त्वं तपोहीनः स्रष्टुं शक्नोति न प्रजाः ॥ एवं चिन्त्य जले मग्नस्ततो रुद्रः प्रतापवान् ॥ ७ ॥ तस्मिन् निमग्ने देवेशे तां ब्रह्मा कन्यकां पुनः ॥ अन्तःशरीरगां कृत्वा गौरीं परमशोभनाम् ॥ ८ ॥ पुनः सिसृक्षुर्भगवानसृजत्सप्त मानसान् ॥ दक्षं च तत आरभ्य प्रजाः सम्यग्विवर्धिताः ॥ ९ ॥ तत्र दाक्षायणीपुत्राः सर्वे देवाः सवासवाः ॥ वसवोऽष्टौ च रुद्राश्च आदित्या मरुतस्तथा ॥ १० ॥ सापि दक्षाय सुश्रोणी गौरी दत्ताथ ब्रह्मणा ॥ दुहितृत्वे पुरा या हि रुद्रेणोढा महात्मना ॥ ११ ॥ सा च दाक्षायणी देवी पुनर्भूत्वा नृपोत्तम ॥ १२ ॥ ततो दक्षः प्रहृष्टात्मा दौहित्रांस्तान्समृद्धिकृत् ॥ दृष्ट्वा यज्ञमथारेभे प्रीणनाय प्रजापतेः ॥ १३ ॥ तत्र ब्रह्मसुताः सर्वे मरीच्याद्या एव च ॥ चक्रुरार्त्विज्यकं कर्म्म स्वे स्वे मार्गे व्यवस्थिताः ॥ १४ ॥ ब्रह्मा स्वयं मरीच्यस्तु बभूवाऽन्ये तथापरे ॥ अत्रिस्तु यज्ञकर्मस्थ आग्नीध्रस्त्वङ्गिरा भवत् ॥ १५ ॥ होता पुलस्त्यस्त्वभवदुद्गाता पुलहोऽभवत् ॥ क्रतौ क्रतुस्तु प्रस्तोता तदा यज्ञे महातपाः ॥ १६ ॥ प्रतिहर्ता प्रचेतास्तु तस्मिन् क्रतुवरे बभौ ॥ सुब्रह्मण्यो वसिष्ठस्तु सनकाद्याः सभासदः ॥ १७ ॥ तत्र याज्यः स्वयं ब्रह्मा स च इज्यस्तु विश्वकृत् ॥ पूज्य दक्षस्य दौहित्रा रुद्रादित्योऽङ्गिरादयः ॥ १८ ॥ प्रत्यक्षं पितरस्ते हि तैः प्रीतैः प्रीयते जगत् ॥ तत्र भागार्थिनो देवा आदित्या वसवस्तथा ॥ १९ ॥ विश्वेदेवाः सपितरो गन्धर्वाद्या मरुद्गणाः ॥ जगृहुर्यज्ञभागांस्तान्यावन्तो हविरर्पिताः ॥ २० ॥ तावत्कालं जलात् सद्य उत्तस्थौ ब्रह्मणः पुनः ॥ रुद्रः कोपोद्भवो यस्तु पूर्वं मग्नो महाजले ॥ २१ ॥ स सहस्रार्कसङ्काशो निश्चक्राम जलात्ततः ॥ सर्वज्ञानमयो देवः सर्वदेवमयोऽमलः ॥ २२ ॥ प्रत्यक्षदर्शी सर्वस्य जगतस्तपसा बभौ ॥ तस्मिंस्तु काले पञ्चानां जातः सर्गो नरोत्तम ॥ २३ ॥ दिव्यानां पृथिवीस्थानां चतुर्णां मरजन्मनाम् ॥ रौद्रसर्गस्य सम्भूतिस्तदा सद्योऽपि जायते ॥ २४ ॥ इदानीं रुद्रसर्गं त्वं शृणु पार्थिवसत्तम ॥ दशवर्षसहस्राणि तपस्तप्त्वा महाजले ॥ २५ ॥ अधिरूढो यदा रुद्रस्तथा चोर्वीं सकाननाम् ॥ दृष्ट्वा सस्यवतीं रम्यां मनुष्यपशुसङ्कुलाम् ॥ २६ ॥ शुश्राव च तदा शब्दानृत्विजां दक्षसद्मनि ॥ आश्रमे याज्ञियानोच्चैर्योगस्थैरीति कीर्त्तितान् ॥ २७ ॥ ततः श्रुत्वा महातेजाः सर्वज्ञः परमेश्वरः ॥

चुकोप सुभृशं देवो वाक्यं चेदमुवाच ह ॥ २८ ॥ अहं पूर्वं तु कविना सृष्टः सर्वात्मना विभुः ॥ प्रजाः सृजस्वेति तदा वाक्यमेतत्तथोक्त
वान् ॥ २९॥ इदानीं केन तत्कर्म्म कृतं सृष्ट्यादिवर्णनम् ॥ एवमुक्तो भृशं कोपान्ननाद परमेश्वरः ॥ ३० ॥ तस्यैव नदतो ज्वालाः श्रोत्रेभ्यो
निर्ययुस्तदा ॥ तत्र भूतानि वेताला उच्छुष्माः प्रेतपूतनाः ॥ ३१ ॥ उत्तस्थुः कोटिशस्तत्र नानाप्रहरणावृताः ॥ तं दृष्ट्वा भूतसङ्घाता
विविधायुधपाणयः ॥ ३२ ॥ ससर्ज वेदविद्याङ्गरथं परमशोभनम् ॥ तस्मिन्मृगद्वयं स्वश्वो त्रितत्त्वं च त्रिवेणुकम् ॥ ३३ ॥ त्रिपूजकं त्रिष
वणं धर्माक्षं मारुतध्वनिम् ॥ अहोरात्रे पताके द्वे धर्माधर्मं तु दण्डकम् ॥ ३४ ॥ शकटं सर्वविद्याश्च स्वयं ब्रह्मा हि सारथिः ॥ गायत्री च
धनुस्तस्य ओङ्कारो गुण एव च ॥ ३५ ॥ स्वराः सप्त शरास्तस्य देवदेवस्य सुव्रत ॥ एवं कृत्वा स सामग्रीं देवदेवः प्रतापवान् ॥ ३६ ॥
जगाम दक्षयज्ञाय कोपाद्रुद्रः प्रतापवान् ॥ गच्छतस्तस्य देवस्य अम्बराङ्गिरसन्नयत् ॥ ३७ ॥ ऋत्विजां मन्त्रनिचयो नष्टो रुद्रागमे तदा ॥
विपरीतमिदं दृष्ट्वा तदा सर्वेऽत्र ऋत्विजः ॥ ३८ ॥ ऊचुः सन्नह्यतां देवा महद्वो भयमागतम् ॥ कश्चिदायाति बलवानसुरो ब्रह्म
निर्मितः ॥ ३९ ॥ यज्ञभागार्थमेतस्मिन्क्रतौ परमदुर्लभे ॥ एवमुक्तास्ततो देवा ऊचुर्मातामहं तदा ॥ ४० ॥ दक्ष तात किमत्रास्मत्कार्यं ब्रूहि
विवक्षितम् ॥ दक्ष उवाच ॥ उद्यन्तां द्रुतमस्त्राणि सङ्ग्रामोऽत्र विधीयताम् ॥ ४१ ॥ एवमुक्ते तदा देवैर्विविधायुधधारिभिः ॥ रुद्रस्यानुचरैः
सार्धं महद्युद्धं प्रवर्त्तितम् ॥ ४२ ॥ तत्र वेतालभूतानि कूष्माण्डा ग्रहपूतनाः ॥ युयुधुर्लोकपालैश्च नानायुधधराणि च ॥ ४३ ॥ दिवो
रौद्राणि भूतानि निर्गच्छन्तो यमालयम् ॥ चिक्षिपुः सायकान्घोरानसीन्प्रासपरश्वधान् ॥ ४४ ॥ भूतान्यपि मृधे घोराण्युल्मुकैरस्थिभिः
शरैः ॥ जघ्नुर्देवान्मृधे रोषाद्रुद्रस्य पुरतो बलात् ॥ ४५ ॥ ततस्तस्मिन्महारौद्रे संग्रामे भीमरूपिणि ॥ रुद्रो भगस्य नेत्रे तु बिभेदैकेषुणा
मृधे ॥४६॥ रुद्रस्य शरपातेन नष्टनेत्रं भगं तदा॥ दृष्ट्वास्य क्रोधात्तेजस्वी पूषा रुद्रमयोधयत्॥४७॥सृजन्तमिषुजालानि पूषणं तु महामृधे ॥
दृष्ट्वा रुद्रोऽस्य दन्तांस्तु चकर्ष परवीरहा ॥ ४८ ॥ तस्य दन्तांस्तदा दृष्ट्वा पूष्णो रुद्रेण पातितान् ॥ दुद्रुवुः सर्वतो दिक्षु रुद्रास्त्वेकादश
द्रुतम् ॥४९॥ ता भग्नां सहसा दिक्षु दृष्ट्वा विष्णुः प्रतापवान् ॥ आदित्यावरजो वाक्यमुवाच स्वबलं तदा ॥५०॥ क्व यात पौरुषं त्यक्त्वा

दर्पं माहात्म्यमेव च ॥ व्यवसायं कुलं भूत कथं न स्मर्यते द्रुतम् ॥५१॥ परमेष्ठिगुणैर्युक्ता लब्धमायुर्यतः पुरा॥ तं नमस्कुरुतामोघं पृथिव्यां
पद्मजं स्वयम् ॥५२॥ एवमुक्त्वा गरुत्मन्तमारुरोह हरिस्तदा ॥ शङ्खचक्रगदापाणिः पीतवासा जनार्दनः ॥५३॥ ततो हरिहरं युद्धमभवल्लोम
हर्षणम् ॥ रुद्रः पाशुपतास्त्रेण विव्याध हरिमोजसा ॥ ५४ ॥ हरिर्नारायणास्त्रेण रुद्रं विव्याध कोपवान् ॥ नारायणं पाशुपतमुभेऽस्त्रे व्योम्नि
गोर्दिते ॥ ५५ ॥ युयुधाते भृशं दिव्यं परस्परजिघांसया ॥ दिव्यं वर्षसहस्रं तु तयोर्युद्धमभूत्तदा ॥ ५६ ॥ तत्रैकं मुकुटोद्बद्धमन्यच्च जटजाल
कम् ॥ एकं प्रध्मापयच्छङ्खमन्यड्डमरुकं शुभम् ॥ ५७ ॥ एकं खड्गकरं तत्र तथान्यं दण्डधारिणम् ॥ एकं कौस्तुभदीप्ताङ्गमन्यं भस्मविभू
षितम् ॥ ५८ ॥ एकं गदां भ्रामयन्तं द्वितीयं दण्डमेव च ॥ एकं शोभाति कण्ठस्थैर्मणिभिः स्वास्थिभिः परम् ॥ ५९ ॥ एकं पीताम्बरं तत्र
द्वितीयं सर्पमेखलम् ॥ एवं तौ स्पर्द्धिनावस्तां रौद्रनारायणात्मकौ ॥ ६० ॥ अन्योऽन्यातिशयोपेतौ तदालोक्य पितामहः ॥ उवाच शाम्यता
मस्त्रे स्वस्वभावेन सुव्रते ॥ ६१ ॥ एवं ते ब्रह्मणा प्रोक्ते शान्तभावं प्रजग्मतुः ॥ अथ विष्णुहरौ ब्रह्मा वाक्यमेतदुवाच ह ॥ ६२ ॥ उभौ हरि
हरौ देवौ लोके ख्यातिं गमिष्यथः॥अयं च यज्ञो विध्वस्तः सम्पूर्णत्वं गमिष्याति॥६३॥दक्षस्य ख्यातिमाँल्लोके सन्तत्यायं भविष्याति ॥६४॥
एवमुक्त्वा हरिहरौ तदा लोकपितामहः ॥ ब्रह्मा लोकानुवाचेदं रुद्रभागोऽस्य दीयताम् ॥ ६५ ॥ रुद्रभागो ज्येष्ठभाग इतीयं वैदिकी
श्रुतिः ॥ स्तुतिं च देवाः कुरुत रुद्रस्य परमेष्ठिनः ॥ ६६ ॥ भगनेत्रहरं देवं पूष्णो दन्तविनाशनम् ॥ स्तुतिं कुरुत वः शीघ्रं गीतैरन्तैस्तु
नामभिः ॥ ६७ ॥ येनायं वः प्रसन्नात्मा वरदत्वं भजेत ह ॥ एवमुक्तास्तु ते देवाः स्तोत्रं शम्भोर्महात्मनः ॥ ६८ ॥ चक्रुः परमया भक्त्या
नमस्कृत्य स्वयम्भुवे ॥ देवा ऊचुः ॥ नमो विषमनेत्राय नमस्ते त्र्यम्बकाय च ॥ ६९ ॥ नमः सहस्रनेत्राय नमस्ते शूलपाणये ॥
नमः खट्वाङ्गहस्ताय नमस्ते दण्डधारिणे ॥७०॥ त्वं देव हुतभुग्ज्वालाकोटिभानुसमप्रभः ॥ अदर्शने वयं देव मूढविज्ञानतोऽधुना ॥ ७१ ॥
नमस्त्रिनेत्रार्त्तिहराय शम्भो त्रिशूलपाणे विकृतास्यरूप ॥ समस्तदेवेश्वर शुद्धभाव प्रसीद रुद्राच्युत सर्वभाव ॥ ७२ ॥ पूष्णोऽस्य
दन्तान्तक भीमरूप प्रलम्बभोगीन्द्रमनोज्ञकण्ठ ॥ विशालदेहाच्युत नीलकण्ठ प्रसीद विश्वेश्वर विश्वमूर्त्ते ॥७३ ॥ भगाक्षिसंस्फोटनदक्षकर्मन्

गृहाण भागं मखतः प्रधानम् ॥ प्रसीद देवेश्वर नीलकण्ठ प्रपाहि नः सर्वगुणोपपन्न ॥ ७४ ॥ सिताङ्गरागाप्रतिपन्नमूर्त्त कपालधारींस्त्रिपुरघ्न देव ॥ प्रपाहि नः सर्वभयेषु चैवमुमापते पुष्करनालजन्म ॥ ७५ ॥ पश्यामि ते देहगतान्सुरेश सर्गाद्यकान्वेदवराननन्त ॥ साङ्गान्सविद्यान्स पदक्रमांश्च सर्वा न्निलीनांस्त्वयि देवदेव ॥ ७६ ॥ भव शर्व महादेव पिनाकिन् रुद्र ते हर ॥ नताः स्म सर्वे विश्वेश त्राहि नः परमेश्वर ॥७७॥ इत्थं स्तुतस्तदा देवैर्देवो महेश्वरः ॥ तुतोष सर्वदेवानां वाक्यं चेदमुवाच ह ॥ ७८ ॥ रुद्र उवाच ॥ भगस्य नेत्रं भवतु पूष्णो दन्तास्तथा मुखे ॥ दक्षस्याच्छिद्रतां यातु यज्ञश्चाप्यदितेः सुताः ॥ ७९ ॥ पशुभावं तथा चापि अपनेष्यामि वः सुराः ॥ मद्दर्शनेन यो जातः पशुभावो दिवौकसाम् ॥ ८० ॥ स मयापहृतः सद्यः पतित्वं वो भविष्यति ॥ अहं च सर्वविद्यानां पतिराद्यः सनातनः ॥ ८१ ॥ अहं वै पतिभावेन पशुमध्ये व्यवस्थितः ॥ अतः पशुपतिर्नाम मम लोके भविष्यति ॥ ८२ ॥ ये मां यजन्ति तेषां स्याद्दीक्षा पाशुपती भवेत् ॥ एवमुक्ते तु रुद्रेण ब्रह्मा लोकपितामहः ॥ ८३ ॥ उवाच रुद्रं सस्नेह स्मितपूर्वमिदं वचः ॥ ध्रुवं पशुपतिर्देव त्वं लोके ख्यातिमेष्यसि ॥ ८४ ॥ अयं च देवस्त नाम्ना लोके ख्यातिं गमिष्यति ॥ आराध्यश्च समस्तानां लोकादीनां गमिष्यति ॥ ८५ ॥ एवमुक्त्वा तदा ब्रह्मा दक्षं प्रोवाच बुद्धिमान् ॥ गौरीं प्रयच्छ रुद्राय पूर्वमेवोपपादिताम् ॥ ८६ ॥ एवमुक्त्वा तदा देवस्तां कन्यां दक्षसन्निधौ ॥ ददौ रुद्राय महते गौरीं परमशोभनाम् ॥ ८७ ॥ दक्षस्य च प्रियं कुर्वन्बहुमानपुरःसरम् ॥ गृहीतायां तु कन्यायां दाक्षायण्यां पितामहः ॥ ८८ ॥ ददौ रुद्राय निलयं कैलासं सुरसन्निधौ ॥ रुद्रोऽपि प्रययौ भूतैः समं कैलासपर्वतम् ॥ ८९ ॥ देवाश्चापि यथास्थानं स्वं स्वं जग्मुर्मुदान्विताः ॥ ब्रह्मापि दक्षसहितः प्राजापत्यं पुरं ययौ ॥९०॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्याने गौर्युत्पत्तिर्नाम एकविंशोऽध्यायः ॥२१॥ अथ गौरीविवाहः ॥ महातपा उवाच ॥ तस्मिन्निवसतस्तस्य रुद्रस्य परमेष्ठिनः ॥ चुकोप गौरी देवस्य पितुर्वैरमथास्मरत् ॥१॥ चिन्तयामास देवस्य त्वनेनापहृतं पुरम् ॥ यज्ञो विध्वंसितो यस्मात्तस्माद्देहं त्यजाम्यहम् ॥ २ ॥ आराध्य तपसा तस्य गृहे भूत्वा व्रजाम्यहम् ॥ कथं गच्छामि पितरं दक्षं क्षयित बान्धवम् ॥३॥ भवपत्नी च दुहिता एवं संचिन्त्य सुन्दरी ॥ जगाम तपसे देवी हिमवन्तं महागिरिम् ॥४॥ तत्र कालेन महता क्षपयन्ती कलेवरम् ॥

स्वशरीराग्निना दग्ध्वा ततः शैलसुताभवत्॥ उमा नाम्नातिमहती कृष्णा चेत्यभिधानतः॥५॥लब्ध्वा तु शोभनां मूर्तिं हिमवन्तगृहे शुभाम्॥ पुन
स्तपश्चकारोग्रं देवं स्मृत्वा त्रिलोचनम्॥६॥असावेव पतिर्मह्यमित्युक्त्वा तपसि स्थिता॥ कुर्वन्त्या तत्तपश्चोग्रं हिमवन्ते महागिरौ ॥७॥ कालेन
महता देवस्तपसाराधितस्तया ॥ आजगामाश्रमं तस्या विप्रो भूत्वा महेश्वरः ॥ ८॥ वृद्धः शिथिलसर्वाङ्गः स्खलंश्चैव पदेपदे ॥ कृच्छ्रात्तस्याः
समीपं चाप्यागत्य द्विजसत्तमः ॥ बुभुक्षितोऽस्मि मे देहि भद्रे भोज्यं द्विजस्य तु ॥९॥ एवमुक्ता तदा कन्या उमा शैलसुता शुभा ॥ उवाच
ब्राह्मणं भोज्यं दास्ये विप्र फलादिकम् ॥ कुरु स्नानं द्रुतं विप्र भुङ्क्ष्वान्नं यदृच्छया॥१०॥एवमुक्तस्तदा विप्रस्तस्याः पार्श्वे महानदीम् ॥ गङ्गां
जगाम स्नानार्थं स्नानं कर्त्तुमवातरत् ॥११॥ स्नानं तु कुर्वता तेन रुद्रेण द्विजरूपिणा ॥ भूत्वा मायामयं भीमं मकरं भयदर्शनम् ॥ ग्राहितस्तु
तदा विप्रस्तेन दुष्टेन मद्गुना॥१२॥दृष्ट्वा धृतमथात्मान मकरेण बलीयसा॥वृद्धमात्मानमथ तां दर्शयन्वाक्यमब्रवीत्॥१३॥अब्रह्मण्यङ्कृतं कन्ये
त्रायस्व मामतो झषात्॥यावन्न याति विकृतिं तावन्मां त्रातुमर्हसि॥१४॥एवमुक्त्वा तदा कन्या चिन्तयामास पार्वती ॥ पितृभावेन शैलेन्द्रं भर्तृभा
वेन शङ्करम्॥स्पृशामि तपसा पूता कथं विप्रं स्पृशाम्यहम् ॥१५॥ यद्येनं नापकर्षामि मकरेण जले धृतम्॥तदानीं ब्रह्मवध्या मे भविष्यति न
संशयः॥१६॥ अन्यं व्यतिक्रमे धर्ममपनेतुं च शक्यते ॥ ब्रह्मवध्या पुनर्नैवमेवमुक्त्वा गताऽसा ॥१७॥सा गत्वा त्वरितं भीरुर्गृहीत्वा पाणिना
द्विजम् ॥ चकर्षान्तर्जलात्तावत्स्वयं भूतपतिर्हरः ॥ १८॥ यमाराध्य तपश्चर्तुमारब्धं शैलकन्यया ॥ स एव भगवान्रुद्रस्तस्याः पाण्यवलम्बि
तः ॥१९॥ तं दृष्ट्वा लज्जिता देवी पूर्वत्यागमसस्मरत् ॥ न किंचिदुत्तरं सुभ्रूर्वदाति स्म सुलज्जया ॥२०॥ तूष्णीम्भूतां तु तां दृष्ट्वा गौरीं रुद्रो
हसन्निव ॥ पाणौगृहीत्वा मां भद्रे कथं त्यक्तुमिहार्हसि ॥ २१ ॥ मत्पाणिग्रहणं भद्रे वृथा यदि करिष्यसि ॥ तदानीं ब्रह्मणः पुत्र्यामाहारार्थं
ब्रवीम्यहम् ॥२२॥ न भवेत्परिहासोऽयमुक्तं देवी परंपरा ॥ लज्जमाना तदा वाक्यं वदाति स्मितपूर्वकम् ॥२३॥ देवदेव त्रिलोकेश त्वदर्थोऽयं
समुद्यमः ॥ प्राग्जन्माराधितो भर्त्ता भवान्देवो महेश्वरः॥२४॥ इदानीं मे भवान्देवः पतिर्नान्यो भविष्यति ॥ किन्तु स्वामी पिता मह्यं शैलेन्द्रो
मे व्रजामि तम् ॥२५॥ अनुज्ञाप्य विधानेन ततः पाणिं गृहीष्यसि ॥२६॥ एवमुक्त्वा तदा देवी पितरं प्राति भामिनी ॥ कृताञ्जलिपुटा भूत्वा

हिमवन्तमुवाच ह ॥ २७ ॥ इतोऽन्यजन्मभर्त्ता मे रुद्रो दक्षमखान्तकः ॥ इदानीं तपसा सैव ज्ञातोऽभूद्गतिभावतः ॥ २८ ॥ स च विश्व
पतिर्भूत्वा ब्राह्मणो मे तपोवनम् ॥ आगत्य भोजनार्थं मां याचयामास शङ्करः॥२९॥ मया स्नातुं व्रजस्वेति चोदितो जाह्नवीं गतः॥ तत्रासौ
वृद्धभावेन द्विजरूपेण शङ्करः॥मकरेण धृतः पूर्वमब्रह्मण्यमुवाच ह ॥३० ॥ ब्रह्महत्याभयात्तात मया पाणौ धृतस्ततः ॥ धृतमात्रः स्वकं देहं
दर्शयामास शंकरः॥३१॥ततो मामब्रवीद्देवः पाणिग्रहणमागतम् ॥ भवती देवि मा किंचिद्विचारय तपोधने ॥३२॥ एवमुक्ता त्वहं तेन शंकरेण
महात्मना ॥ तमनुज्ञाप्य देवेशं भवन्तं प्रष्टुमागता॥३३॥इदानीं यत्क्षमं कार्यं तच्छीघ्रं संविधीयताम् ॥३४॥एवं श्रुत्वा तदा वाक्यं शैलराजो
मुदा युतः॥ऊचे दुहितरं कन्यां तस्मिन्काले वरानने॥३५॥पुत्रि धन्योऽस्म्यहं लोके यस्य रुद्रः स्वयं हरः ॥ जामांता भविता देवस्त्वयाऽपत्य
वदस्म्यहम्॥३६॥स्थापितो मूर्ध्नि देवानामपि पुत्रि त्वया ह्यहम् ॥स्थीयतां क्षणमेक तु यावदागमन मम॥३७॥एवमुक्त्वा गतो राजा शैलानां
ब्रह्मणोऽन्तिकम् ॥ तत्र दृष्ट्वा महात्मानं सर्वदेवपितामहम् ॥३८॥ उवाच प्रणतो भूत्वा ब्रह्माणं शैलराट् ततः ॥ देवोमा दुहिता मेऽद्य तां रुद्राय
ददाम्यहम् ॥३९॥ प्रयच्छेवाच देवानां तदा लोकपितामहः ॥४०॥ एवमुक्तः शैलराजः स्ववेश्मागम्य सत्वरम् ॥ तुम्बुरुं नारदं चैव हाहा हूहू
मथाह्वयत् ॥ स गत्वा किन्नरांश्चैव असुरान्राक्षसानपि ॥४१॥ पर्वताः सरितः शैला वृक्षा ओषधयस्तथा ॥ आगता मूर्त्तिमन्तो वै पर्वताः सङ्ग
मोपलाः॥ हिमवत्कन्यकां द्रष्टुं विवाहे शंकरेण ह ॥ ४२॥ तत्र वेदिः क्षितिश्चासीत्कलशाः सप्त सागराः ॥ सूर्यो दीपस्तथा सोमः सरितो बवहु
र्जलम् ॥४३॥ एवं विवाहसामग्रीं कृत्वा शैलवराधिपः ॥ प्रेषयामास रुद्राय समीपं मन्दरं गिरिम् ॥४४॥ स तदा शङ्करोक्तस्तु मन्दरो द्रुत
माययौ॥विधिना सोमया पाणिं जग्राह परमेश्वरः॥४५॥ तत्रोत्सवे पर्वतनारदौ द्वौ जगुश्च सिद्धा ननृतुर्वनस्पतीः ॥ पुष्पाण्यनेकानि विचिक्षिपुः
शुभा ननृतुरुच्चैः सुरयोषितो भृशम् ॥४६॥ तस्मिन्विवाहे सलिलप्रवाहे चतुर्मुखो लोकपरः स्वसंस्थः ॥ उवाच कन्यां तव पुत्रि लोके नारी
सुभर्त्ता तव चान्यपुंसाम् ॥ ४७ ॥ इत्येवमुक्त्वा स उमां सरुद्रां पितामहः स्वं पुरमाजगाम ॥ ४८ ॥ स बभूव यथा प्रोक्तं प्रजापालाय
पृच्छते ॥ ऋषिणा महता पूर्वं तपसा भावितात्मना ॥४९ ॥ गौर्या उत्पत्तिरेषा वै कथिता परमर्षिणा ॥ विवाहश्च यथा वृत्तस्तत्सर्वं कथितं

तव ॥ ५० ॥ एतत्सर्वं तु गौर्या वै सम्पन्नं तु तृतीयया ॥ तस्यां तिथौ तृतीयायां लवणं वर्ज्जयेत्सदा ॥ ५१ ॥ यश्चोपोष्यति नारी वा सा
सौभाग्यं तु विन्दति ॥ ५२ ॥ दुर्भगा या तु नारी स्यात्पुरुषश्चातिदुर्भगः ॥ एतच्छ्रुत्वा तृतीयायां लवणं तु विवर्ज्जयेत् ॥ ५३ ॥ सर्वं
कामानवाप्नोति सौभाग्यं द्रव्यसम्पदः ॥ आरोग्यं च सदा लोके कान्तिं पुष्टिं च विन्दति ॥५४॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महा
तपउपाख्याने गौर्युद्वाहो नाम द्वाविंशोऽध्यायः ॥ २२ ॥ अथ गणपत्युत्पत्तिः ॥ प्रजापाल उवाच ॥ कथं गणपतेर्जन्म मूर्त्तिमत्त्वं च सत्तम ॥
एतन्मे संशयं छिन्धि हृदि कष्टं व्यवस्थितम् ॥ १ ॥ महातपा उवाच ॥ पूर्वं देवगणाः सर्वे ऋषयश्च तपोधनाः ॥ कार्यारम्भं तथा चक्रुः
सिद्ध्यन्ते च न संशयः ॥ २ ॥ सन्मार्गवर्तिषु तथा सिद्ध्यन्ते विघ्नतः क्रियाः ॥ असत्कारिषु सर्वेषु तद्वदेवमविघ्नतः ॥ ३ ॥ ततो देवाः
सपितराश्चिन्तयामासुराजसा ॥ असत्कार्येषु विघ्नार्थं सर्व एवाभ्यमन्त्रयन् ॥ ४ ॥ ततस्तेषां तदा मन्त्रं कुर्वतां त्रिदिवौकसाम् ॥ बभूव बुद्धिर्गमने
रुद्रं प्रति महामतिम् ॥५॥ ते तत्र रुद्रमामन्त्र्य कैलासनिलयं गुरुम् ॥ ऊचुः सविनयं सर्वे प्रणिपातपुरःसरम् ॥ ६ ॥ देवा ऊचुः ॥ देवदेव
महादेव शूलपाणे त्रिलोचन ॥ विघ्नार्थमविशिष्टानामुत्पादयितुमर्हसि ॥ ७ ॥ एवमुक्तस्तदा देवैर्भवः परमया मुदा ॥ उमां निरीक्षयामास
चक्षुषाऽनिमिषेण ह ॥८॥ देवानां सन्निधौ तस्य पश्यतस्तां महात्मनः ॥ चिन्ताभूद्व्योम्नि मूर्तिर्नो दृश्यते केन हेतुना ॥९॥ पृथिव्या विद्यते
मूर्तिरपां मूर्त्तिस्तथैव च ॥ तेजसः श्वसनस्यापि मूर्तिरेषा तु दृश्यते ॥१०॥ आकाशं च कथं नेति मत्वा देवो जहास च ॥ ज्ञानशक्तिः पुमान्
दृष्ट्वा यद्दृष्टं व्योम्नि शम्भुना ॥११॥ यथोक्तं ब्रह्मणा पूर्वं शरीरं तु शरीरिणाम् ॥ यच्चापि हसितं तेन देवेन परमेष्ठिना ॥१२॥ एतत्कार्यं चतुष्केण
पृथिव्यादिचतुर्ष्वपि ॥ मूर्तिमानतितेजस्वी हसतः परमेष्ठिनः ॥१३॥ प्रदीप्तास्यो महादीप्तः कुमारो भासयन्दिशः ॥ परमेष्ठिगुणैर्युक्तः साक्षाद्रुद्र
इवापरः ॥१४॥ उत्पन्नमात्रो देवानां व्युषितः संप्रमोहयन् ॥ कान्त्या दीप्त्या तथा मूर्त्या रूपेण च महात्मवान् ॥१५॥ तं दृष्ट्वा परमं रूपं कुमारस्य
महात्मनः ॥ उमाऽनिमेषनेत्राभ्यां तमपश्यच्च भामिनी ॥१६॥ तं दृष्ट्वा कुपितो देवः स्त्रीभावं चञ्चलं तथा ॥ मत्वा कुमाररूपं तु शोभनं मोहनं
दृशाम् ॥ १७ ॥ ततः शशाप तं देवो गणेशं परमेश्वरः ॥ कुमार गजवक्त्रस्त्वं प्रलम्बजठरस्तथा ॥ भविष्यसि तथा सर्परुपवतिगति

धुवम् ॥ १८ ॥ एवं शशाप तं देवस्तीव्रकोपसमन्वितः ॥ धुन्वन् शरीरमुत्थाप्य ततो देवो रुषान्वितः ॥१९ ॥ यथा यथासौ स्वशरीरमाद्यं
धुनोति देवस्त्रिशिखास्त्रपाणिः ॥ तथातथा चाङ्गरुहाच्चकासे जडं क्षितौ संन्यपतत्तथान्यत् ॥ २० ॥ विनायकानेकविधा गजास्यास्तमाळ
नीलाञ्जनसन्निकाशाः ॥ उत्तस्थुरुच्चैर्विविधास्त्रहस्तास्ततस्तु देवो मनसाकुलेन ॥२१॥ किमेतदित्यद्भुतकर्मकारी ह्येकः करोत्यप्रतिमं महच्च ॥
कार्यं सुराणां कृतमेतदिष्टं भवेद्यथैनं परितः कुतस्तव ॥ २२ ॥ दिवौकसां चिन्तयतां तथा तु विनायकैः क्ष्मा क्षुभिता बभूव ॥ चतुर्मुखश्चा
प्रतिमं विमानमारुह्य खे वाक्यमिदं जगाद ॥ २३॥ धन्याः स्थ देवाः सुरनायकेन त्रिलोचनेनाद्भुतरूपिणा च ॥ अनुगृहीताः परमेश्वरेण सुर
द्विषां विघ्नकृतां नतौ च ॥ २४ ॥ इत्येवमुक्त्वा प्रपितामहस्तानुवाच देवस्त्रिशिखास्त्रपाणिम् ॥ यस्ते विभो वक्त्रसमुद्भवः प्रभुर्विनायकानां
भव सन्त्विमेऽनुगाः ॥२५॥ भवान्तथास्यात्मवरेण चाम्बरे त्वया चतुर्थस्तु शरीरचारी ॥ आकाशमेतद्बहुधा व्यवस्थितं त्वया चैको वदतां
तेऽथयाताः ॥ २६ ॥ प्रभुर्भव त्वं प्रतिमास्त्रपाणिना इमानि चास्त्राणि वरांश्च देहि ॥ इत्येवमुक्त्वा विगते पितामहे त्रिलोचनश्चात्मभवं
जगाद॥२७॥ विनायको विघ्नकरो गजास्यो गणेशनामा च भवस्य पुत्रः॥ एते च सर्वे तवयान्तु भृत्या विनायकाः क्रूरदृशः प्रचण्डाः ॥२८॥
उच्छुष्मदानादिविवृद्धदेहाः कार्येषु सिद्धिं प्रतिपादयन्तः॥भवांश्च देवेषु तथा मखेषु कार्येषु चान्येषु महानुभावान् ॥२९॥ अग्रे तु पूजां लभते
ऽन्यथा च विनाशयिष्यस्यथ कार्यसिद्धिम् ॥ इत्येवमुक्त्वा परमेश्वरेण सुरैः समं काञ्चनकुम्भसंस्थैः ॥ ३० ॥ जलैस्तथासावभिषिक्तगात्रो
रराज राजेंद्र विनायकानाम् ॥ ३१ ॥ दृष्ट्वाभिषिच्यमानं तु देवास्तं गणनायकम् ॥ तुष्टुवुः प्रयताः सर्वे त्रिशूलास्त्रस्य सन्निधौ ॥ ३२ ॥
देवा ऊचुः ॥ नमस्ते गजवक्त्राय नमस्ते गणनायक ॥ विनायक नमस्तेऽस्तु नमस्ते चण्डविक्रम ॥ ३३ ॥ नमोऽस्तु ते विघ्नकर्त्रे नमस्ते
सर्पमेखल ॥ नमस्ते रुद्रवक्त्रोत्थ प्रलम्बजठराश्रित ॥ सर्वदेवनमस्कारादविघ्नं कुरु सर्वदा ॥३४॥ एवं स्तुतस्तदा देवैर्महात्मा गणनायकः ॥
अभिषिक्तस्तु रुद्रेण सोमयाऽपत्यतां गतः ॥ ३५ ॥ एतच्चतुर्थ्यां सम्पन्नं गणाध्यक्षस्य पार्थिव ॥ यतस्ततोऽयं महती तिथीनां परमा
तिथिः ॥ ३६ ॥ एतस्यां यस्तिलान् भुक्त्वा भक्त्या गणपतिं नृप ॥ आराधयति तस्याशु तुष्यते नात्र संशयः ॥ ३७ ॥ यश्चैतत्पठति

स्तोत्रं यश्चैतच्छृणुयात्सदा ॥ न तस्य विघ्ना जायन्ते न पापं सर्वथा नृप ॥ २८ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्याने विनायकोत्पत्तिर्नाम त्रयोविंशोऽध्यायः॥२३॥ अथ सर्पोत्पत्तिः ॥ धरण्युवाच ॥ कथं ते गात्रसंस्पर्शान्मूर्त्तिमन्तो महाबलाः ॥ नागा बभूवु र्देवस्य कारणं ते महीधर ॥ १ ॥ श्रीवराह उवाच ॥ श्रुत्वा गणपतेर्जन्म प्रजापालो नराधिपः ॥ उवाच श्लक्ष्णया वाचा तं मुनिं शंसित व्रतम् ॥ २ ॥ प्रजापाल उवाच ॥ भगवंस्तार्क्ष्यविषयाः कथं मूर्त्तिमुपागताः ॥ नागा बभूवुः कुटिला एतदाख्यातुमर्हसि ॥ ३ ॥ महातपा उवाच ॥ सृजता ब्रह्मणा सृष्टिं मरीचिः सूतिकारणम् ॥ प्रथमं मनसा ध्यातस्तस्य पुत्रस्तु कश्यपः ॥ ४ ॥ तस्य दाक्षायणी भार्या कद्रू र्नाम शुचिस्मिता ॥ मारीचो जनयामास तस्यां पुत्रान्महाबलान् ॥५॥ अनन्तं वासुकिं चैव कम्बलं च महाबलम् ॥ कर्कोटकं च राजेन्द्र पद्मं चान्यं सरीसृपम् ॥ ६ ॥ महापद्मं तथा शङ्खं कुलिकं पापराजिलम् ॥ एते कश्यपदायादाः प्रधानाः परिकीर्त्तिताः ॥७ ॥ एतेषां तु प्रसूत्या तु इदमापूरितं जगत् ॥ ८ ॥ कुटिला हीनकर्माणस्तीक्ष्णास्योत्थविषोल्बणाः ॥ दृष्ट्वा सन्दश्य मनुजान् भस्म कुर्युः क्षणाद्ध्रुवम् ॥ ९ ॥ शब्दगामी यथा स्पर्शो मनुष्याणां नराधिप ॥ अहन्यहनि जायेत क्षयः परमदारुणः ॥ १० ॥ आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्वाः सम न्ततः ॥ जग्मुः शरण्यं शरणं परं तु परमेश्वरम् ॥ ११ ॥ इममेवार्थमुद्दिश्य प्रजाः सर्वा महीपते ॥ ऊचुः कमलजन्मेशं पुराणं ब्रह्मसंज्ञि तम् ॥ १२ ॥ त्राहि नस्तीक्ष्णदंष्ट्रेभ्यो भुजङ्गेभ्यो महाबल ॥ अहन्यहनि ये देव पश्येयुरुरगा दृशा ॥ मनुष्यं मृगयूथं वा तत्सर्वं भस्मसा द्भवेत् ॥ १३ ॥ त्वया सृष्टिः कृता देव लीयते सा भुजङ्गमैः ॥ एवञ्ज्ञात्वा तु दुर्वृत्तं तत्कुरुष्व महामते ॥१४॥ ब्रह्मोवाच ॥ अहं रक्षां विधा स्यामि भवतीनां न संशयः ॥ व्रजध्वं स्वानि धिष्ण्यानि प्रजापालाः ससाध्वसाः ॥ १५॥ एवमुक्तास्तु जग्मुस्ते ब्रह्मणाव्यक्तमूर्त्तिना ॥ आग तासु प्रजास्वाद्यस्तानाहूय भुजङ्गमान् ॥ शशाप परमक्रुद्धो वासुकिप्रमुखांस्तथा ॥ १६ ॥ ब्रह्मोवाच ॥ यतो मत्प्रभवान्नित्यं क्षयं नयत मानुषान् ॥ भवान्तरे अथान्यस्मिन्मातुः शापात्सुदारुणात् ॥ भवितातिक्षयो घोरो नूनं स्वायम्भुवेऽन्तरे ॥ १७ ॥ एवमुक्तास्तु वेपन्तो ब्रह्मणा भुजगोत्तमाः ॥ निपत्य पादयोस्तस्य इदमूचुर्वचस्तदा ॥ १८ ॥ नागा ऊचुः ॥ भगवन्कुटिला जातिरस्माकं भवता कृता ॥ विषो

त्वणत्वं क्रूरत्वं दृक्शस्त्रत्वं च नोऽव्ययाम् ॥ सम्पादितं त्वया देव इदानीं शमयाच्युत ॥ १९ ॥ ब्रह्मोवाच ॥ यदि नाम मया सृष्टा
भवन्तः कुटिलाशयाः ॥ ततः किं मनुजान्नित्यं भक्षयध्वं गतव्यथाः ॥ २० ॥ नागा ऊचुः ॥ मर्यादां कुरु देवेश स्थानं चैव पृथक्
पृथक् ॥ २१ ॥ नागानां वचनं श्रुत्वा देवो वचनमब्रवीत् ॥ अहं करोमि वो नागाः समयं मनुजैः सह ॥ २२ ॥ तदेकमनसः सर्वे शृणुध्वं
मम शासनम् ॥ पातालं वितलं चैव सुतलाख्यं तृतीयकम् ॥ २३ ॥ दत्तं वै वस्तुकामानां गृहं तत्र गमिष्यथ ॥ तत्र भोगान्बहुविधान्भुञ्जाना
मम शासनात् ॥ २४ ॥ तिष्ठध्वं सप्तमं यावद्रात्र्यन्तं मे पुनः पुनः ॥ ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ ॥ २५ ॥ दायादाः सर्वदेवानां
सुपर्णस्य च धीमतः ॥ तदा प्रसूतिर्वः सर्वा भोक्ष्यते चित्रभानुना ॥ २६ ॥ भवतां नैव दोषोऽयं भविष्यति न संशयः ॥ ये वै क्रूरा भोगिनो
दुर्विनीतास्तेषामन्तो भविता नान्यथैतत् ॥२७॥ कालप्राप्तं भक्षयध्वं दशध्वं तथाऽपकारे च कृते मनुष्यान् ॥२८॥ मन्त्रौषधैर्गारुडमण्डलैश्च
बद्धैर्दृष्टैर्मानवा ये चरन्ति ॥ तेषां भीतैर्वर्त्तितव्यं न चान्यच्चिन्त्यं कार्यं चान्यथा वो विनाशः ॥ २९ ॥ इतीरिता ब्रह्मणा ते भुजङ्गा जग्मुः
स्थानं क्ष्मातलाख्यं हि सर्वे ॥ ३० ॥ एवं शापं ते तु लब्ध्वा प्रसादं च चतुर्मुखात् ॥ तस्थुः पातालनिलयं मुदितेनान्तरात्मना ॥३१॥ एतत
सर्वं च पंचम्यां तेषां जातं महात्मनाम् ॥ अतः प्रिया तिथिर्धन्या सर्वपापहरा शुभा ॥ ३२ ॥ एतस्यां संयतो यस्तु अम्लं तु परिवर्ज्जयेत् ॥
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ॥ ३३ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्याने सर्पोत्पत्तिर्नाम चतुर्विंशोऽ
ध्यायः ॥ २४ ॥ अथ कार्त्तिकेयोत्पत्तिः ॥ प्रजापाल उवाच ॥ अहङ्कारात्कथं जज्ञे कार्त्तिकेयो द्विजोत्तम ॥ एतन्मे संशयं छिन्धि पृच्छतो
वै महामुने ॥ १ ॥ महातपा उवाच ॥ सर्वेषामेव तत्त्वानां यः परः पुरुषः स्मृतः ॥ तस्मादव्यक्तमुत्पन्नं तत्त्वादि त्रिविधं तु तत् ॥ २ ॥ पुरु
षाव्यक्तयोर्मध्ये महत्त्वं समपद्यत ॥ स चाहङ्कार इत्युक्तो यो महान्समुदाहृतः ॥३॥ पुरुषो विष्णुरित्युक्तः शिवो वा नामतः स्मृतः ॥ अव्यक्तं
तु उमा देवी श्रीर्वा पद्मनिभेक्षणा ॥ ४ ॥ तत्संयोगादहङ्कारः स च सेनापतिर्गुहः ॥ तस्योत्पत्तिं प्रवक्ष्यामि शृणु राजन्महामते ॥ ५ ॥
आद्यो नारायणो देवस्तस्माद्ब्रह्मा ततोऽभवत् ॥ अतः स्वयम्भुवश्चान्ये मरीच्याद्याः सम्भवाः ॥ ६ ॥ तदारभ्य सुरा दैत्या गन्धर्वा मानुषाः

खगाः ॥ पशवः सर्वभूतानि सृष्टिरेषा प्रकीर्तिता ॥ ७ ॥ सृष्ट्यां विस्तारितायां तु देवदैत्या महाबलाः ॥ सात्वतं भावमास्थाय युयुधुर्विजि
गीषवः ॥ ८ ॥ दैत्यानां बलिनः सन्ति नायका युद्धदुर्मदाः ॥ हिरण्यकशिपुः पूर्वं हिरण्याक्षो महासुरः ॥ ९॥ विप्रचित्तिर्विचित्रस्तु भीमाक्षः
क्रौञ्च एव च ॥ एतेऽतिबलिनः शूरा देवसैन्यं महामृधे ॥ १० ॥ अमरांश्च शितैर्बाणैर्जयन्त्यनुदिनं मृधे ॥ तेषां पराजयं दृष्ट्वा देवानां च
बृहस्पतिः ॥ ११ ॥ उवाच हीनं वै सैन्यं नायकेन विना सुधः ॥ एकेनेन्द्रेण दिव्यं तु सैन्यं पातुं न शक्यते ॥ १२॥ अतः सेनापतिं कञ्चि
दन्वेषयत मा चिरम् ॥ एवमुक्तास्ततो देवा जग्मुर्लोकपितामहम् ॥ १३ ॥ सेनापतिं च नो देहि वाक्यमूचुः ससम्भ्रमम् ॥ ततो दध्यौ चतु
र्वक्त्रः किमेषां क्रियते मया ॥ १४ ॥ ब्रह्मणश्चिन्त्यमानस्य रुद्रं प्रति मनो गतम् ॥ ततो देवाः सगन्धर्वा ऋषयः सिद्धचारणाः ॥ १५ ॥
ब्रह्माणं पुरतः कृत्वा जग्मुः कैलासपर्वतम् ॥ तत्र दृष्ट्वा महादेवं शिवं पशुपतिं विभुम् ॥ तुष्टुवुर्विविधैः स्तोत्रैः शक्राद्यास्त्रिदिवौकसः ॥ १६ ॥
देवा ऊचुः ॥ नमाम सर्वे शरणार्थिनो वयं महेश्वरं त्र्यम्बकभूतभावनम् ॥ उमापते विश्वपते मरुत्पते जगत्पते शङ्कर पाहि नः स्वयम् ॥ १७ ॥
जटाकलापाग्रशशाङ्कदीधितिप्रकाशिताशेषजगत्त्रयामल ॥ त्रिशूलपाणे पुरुषोत्तमाच्युत त्वं पाहि नो दैत्यभयादुपस्थितात् ॥ १८ ॥ त्वमादि
देवः पुरुषोत्तमो हरिर्भवो महेशस्त्रिपुरान्तको विभुः ॥ भगाक्षहा दैत्यरिपुः पुरातनो वृषध्वजः पाहि सुरोत्तमोत्तम ॥ १९ ॥ गिरीशजानाथ
गिरिप्रियाप्रिय प्रभो समस्तामरलोकपूजित ॥ गणेश भूतेश शिवाऽक्षयाव्यय त्वं पाहि नो दैत्यवरान्तकाच्युत ॥ २० ॥ पृथ्व्यादितत्त्वेषु
भवान्प्रतिष्ठितो ध्वनिस्वरूपो गगने विशेषतः ॥ लीनो द्विधा तेजसि स त्रिधा जले चतुः क्षितौ पञ्च गुणप्रधानः ॥ २१ ॥ अग्निस्वरूपोऽसि
तरौ तथोपले सत्यस्वरूपोऽसि तथा तिलेष्वपि ॥ तैलस्वरूपो भगवान्महेश्वरस्त्वं पाहि नो दैत्यगणार्दितान्हर॥२२॥ नासीद्यदाऽकाण्डमिदं
त्रिलोचन प्रभाकरेन्द्रेन्दुमुखान् विना कुतः ॥ तदा भवानेव विरुद्धलोचन प्रमाणबाधादिविवर्जितः स्थितः ॥ २३ ॥ कपालमालिन् शशि
खण्डशेखर श्मशानवासिन् सितभस्मगुण्ठित ॥ फणीन्द्रसंवीततनोऽन्तकान्तक त्वं पाहि नो दक्षधिया सुरेश्वर॥२४॥ भवान्पुमान् शक्तिरियं
गिरेः सुता सर्वाङ्गरूपा भगवंस्तथा त्वयि ॥ त्रिशूलरूपेण जगद्भयङ्करे स्थितं त्रिनेत्रेषु मखाग्नयस्त्रयः ॥ २५ ॥ जटास्वरूपेण समस्तसागराः

कुलाचलाः सिन्धुवहाश्च सर्वशः ॥ शरीरजं ज्ञानमिदं त्ववास्थितं तदेव पश्यन्ति कुदृष्टयो जनाः ॥ २६॥ नारायणस्त्वं जगतां समुद्भवस्तथा
भवानेव चतुर्मुखो महान् ॥ सत्त्वाग्निभेदेन तथाग्निभेदतो युगादिभेदेन च संस्थितास्त्रिधा ॥ २७ ॥ भवन्तमेते सुरनायकाः प्रभो
भवार्थिनोऽन्यस्य वदन्ति तोषकम् ॥ यतस्ततो नो भव भूतिभूषण त्वं पाहि विश्वेश्वर रुद्र ते नमः ॥ २८॥ महातपा उवाच ॥ एवं स्तुत
स्तदा देवो रुद्रः पशुपतिः सुरैः ॥ उवाच देवानव्यग्रः किं कार्यं ब्रूत मा चिरम् ॥२९॥ देवा ऊचुः ॥ सेनापतिं च देवेश देहि दैत्यवधाय वै॥
देवानां ब्रह्ममुख्यानामेतदेव हितं भवेत् ॥३०॥ रुद्र उवाच ॥ ददामि सेनानाथं वो देवा भवत विज्वराः ॥ भविष्ममहित पौराणां योगादीना
मचिन्तयत् ॥ ३१ ॥ एवमुक्त्वा हरो देवान्विसृज्य स्वाङ्गसंस्थिताम् ॥ शक्तिं संक्षोभयामास पुत्रहेतोः परन्तप ॥ ३२ ॥ तस्य क्षोभयतः
शक्तिं ज्वलनार्कसमप्रभः ॥ कुमारः सहजां शक्तिं बिभ्रज्ज्ञानैकशालिनीम् ॥ ३३ ॥ उत्पत्तिस्तस्य राजेन्द्र बहुरूपा व्यवस्थिता ॥ मन्वन्तरे
ष्वनेकेषु देवसेनापतिः किल॥३४॥योऽसौ शरीरगो देवस्त्वहङ्कारेति कीर्तितः॥ प्रयोजनवशाद्देवः देवसेनापतिर्विभो॥३५॥तस्मिन्जाते स्वयं
ब्रह्मा सर्वदेवैः समन्वितः ॥पूजयामास देवेशं शिवं पशुपतिं तदा॥३६॥सर्वैश्च दैवैः ऋषिभिश्च सिद्धैः सेनापतिर्दानवरेण तेन॥आप्यायितः सोऽपि
सुरानुवाच सहायौ मे क्रीडनकं च दत्तम् ॥३७॥श्रुत्वा वचस्तस्य महानुभावो वाक्यं महादेव इदं जगाद ॥ ददामि ते क्रीडनकं तु कुक्कुटं तथा
नुगौ शाखविशाखसंज्ञौ॥३८॥कुमार भूतग्रहनायको भवान् सेनापतिस्त्वं भव देवसंघे॥एवमुक्त्वा ततो देवः सर्वदेवांश्च पार्थिव॥३९॥तुष्टुवुर्वा
ग्भिरिष्टाभिः स्कन्दं सेनापतिं तदा॥देवा ऊचुः॥भवन्त्वं देवसेनानीर्महेश्वरसुत प्रभो॥४०॥ षण्मुख स्कन्द विश्वेश कुक्कुटध्वज पावके॥ कम्पितारे
कुमारेश स्कन्द बालग्रहानुग ॥४१॥ जितारे क्रौंचविध्वंस कृत्तिकाज शिवात्मज ॥ भूतग्रहपतिश्रेष्ठ पावकप्रियदर्शन ॥ ४२ ॥ महाभूतपते
पुत्र त्रिलोचन नमोऽस्तु ते ॥ एवं स्तुतस्तदा देवैर्विवृद्धेन भवनन्दनः॥४३॥ द्वादशादित्यसङ्काशो बभूवातुलविक्रमः ॥ त्रैलोक्यं तेजसा स्वेन
तापयामास पार्थिव ॥४४॥प्रजापाल उवाच ॥ कथं त्वं कृत्तिकापुत्रमुक्तवान् शास मे गुरो ॥ कथं वा पावकिरसौ कथं षण्मातृनन्दनः ॥४५॥
महातपा उवाच ॥ आदिमन्वन्तरे देवस्योत्पत्तिर्या मयोदिता ॥ परोक्षदर्शिभिर्देवैरेवमेव स्तुतः प्रभो ॥ ४६ ॥ कृत्तिका पावकस्तस्य मातरो

गिरिजा तथा ॥ द्वितीयजन्मानि गुहस्यैते उत्पत्तिहेतवः ॥ ४७ ॥ एवमेतत्तवाख्यातं पृच्छतः पार्थिवोत्तम ॥ आत्मविद्यामृतं गुह्यमहङ्कारस्य
सम्भवः ॥ ४८ ॥ स्वयं स्कन्दो महादेवः सर्वपापप्रणाशनः ॥ तस्य षष्ठीं तिथिं प्रादादभिषेके पितामहः ॥ ४९ ॥ अस्यां फलाशने यस्तु
पूजयेद्यतमानसः ॥ अपुत्रो लभते पुत्रमधनोऽपि धनं लभेत् ॥ ५० ॥ यं यमिच्छेत्तु मनसा लभते तं तु मानवः ॥ यश्चैतत्पठति स्तोत्रं
कार्तिकेयस्य मानवः ॥ ५१ ॥ तस्य गेहे कुमाराणां क्षेमारोग्यं भविष्यति ॥ ५२ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्याने
स्कन्दोत्पत्तिर्नाम पंचविंशोऽध्यायः ॥ २५ ॥ अथादित्योत्पत्तिः ॥ प्रजापाल उवाच ॥ शरीरस्य कथं मूर्त्तिग्रहणं ज्योतिषो द्विज ॥ एतन्मे
संशयं छिन्धि प्रणतस्य द्विजोत्तम ॥ १ ॥ महातपा उवाच ॥ योऽसावात्मा ज्ञानशक्तिरेक एव सनातनः ॥ स द्वितीयं यदा चैच्छत्तदा तेजः
समुत्थितम् ॥ २ ॥ तत्सूर्य इति भास्वांस्तु अन्योन्येन महात्मनः ॥ लीनीभूतानि तेजांसि भासयन्ति जगत्त्रयम् ॥ ३ ॥ तस्मिन् सर्वे सुराः
सिद्धा गणाः सर्वमहर्षिभिः ॥ स्वयंभूत इति प्रोक्तस्तस्मात्सूर्यस्तु सोऽभवत् ॥ ४ ॥ लीनीभूतस्य तस्याशु तेजसोऽभूच्छरीरकम् ॥ पृथक्त्वेन
रविः सोऽथ कीर्त्यते वेदवादिभिः॥५॥भासयेत्सर्वलोकांस्तु यतोऽसावुत्थितो दिवि ॥ अतोऽसौ भास्करः प्रोक्तः प्रकाशाच्च प्रभाकरः ॥६॥
दिवा दिवस इत्युक्तस्तत्कारित्वाद्दिवाकरः ॥ सर्वस्य जगतस्त्वादिरादित्यस्तेन चोच्यते ॥ ७ ॥ एतस्य तेजसा जाता आदित्या द्वादश
पृथक् ॥ प्रधान एक एवायं जगत्सु परिवर्तते ॥८ ॥ तं दृष्ट्वा जगतो व्याप्तिं कुर्वाणं परमेश्वरम् ॥ तस्यैवान्तःस्थिता देवा विनिष्क्रम्य स्तुतिं
जगुः ॥९॥ देवा ऊचुः ॥ भवान् प्रसूतिर्जगतः पुराणः प्रपासि विश्वं प्रलये च हंसि ॥ समुत्थितस्त्वं सततं प्रयासि विश्वं सदा त्वां प्रणताः
स्म नित्यम् ॥ १० ॥ त्वया ततं सर्वत एव तेजः प्रतापितं सूर्य जगत्प्रवृत्तौ ॥ सप्ताश्वयुक्ते च रथे स्थितस्त्वं कालाक्षमन्वन्तरवेगयुक्ते ॥११॥
प्रभाकरस्त्वं रविरादिदेव आत्मा समस्तस्य चराचरस्य ॥ पितामहस्त्वं वरुणो यमश्च भूतं भविष्यच्च वदन्ति सिद्धाः ॥ १२ ॥
तेजोऽरिविध्वंसन वेदमूर्त्ते प्रपाहि चास्मान् शरणागतान् सदा ॥ वेदान्तवेद्योऽसि मखेषु देव त्वं हूयसे विष्णुरिति प्रसन्न ॥ १३ ॥ इति
स्तुतस्तैः सुरनाथ भक्त्या प्रपाहि शम्भो न इति प्रसह्य ॥ १४ ॥ एवमुक्तस्तदा देवैः सौम्यां मूर्त्तिमथाकरोत् ॥ प्रकाशत्वं जगामाशु देवतानां

महाप्रभः ॥ १५ ॥ एतत्सर्वसुराणां तु दहनं शामितं त्वया ॥ सप्तम्यां खलु सूर्येण मूर्त्तिस्त्वङ्गीकृता भुवि ॥ १६ ॥ एतां यः पुरुषो
भक्त्या उपास्ते सूर्यमर्च्चयेत् ॥ भास्करश्चैव तस्यासौ फलमिष्टं प्रयच्छति ॥ १७ ॥ एतत्ते कथितं राजन् सूर्याख्यानं पुरातनम् ॥ आदि
मन्वन्तरे वृत्तं मत्तस्त्वं शृणु साम्प्रतम् ॥ १८ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्याने आदित्योत्पत्तिर्नाम षड्विंशोऽ
ध्यायः ॥ २६ ॥ अथाष्टमातृत्पत्तिः ॥ महातपा उवाच ॥ पूर्वमासीन्महादैत्यो बलवानन्धको भुवि ॥ स देवान्वशमानिन्ये ब्रह्मणो
वरदर्पितः ॥१॥ तेनात्मसात्सुराः कृत्वा त्याजिता मेरुपर्वतम् ॥ ब्रह्माणं शरणं जग्मुरन्धकस्य भयार्दिताः ॥२॥ तानागतान्तदा ब्रह्मा उवाच
सुरसत्तमान् ॥ किमागमनकृत्यं वो देवा ब्रूत किमास्यते ॥ ३ ॥ देवा ऊचुः ॥ अन्धकेनार्दिताः सर्वे वयं देवा जगत्पते ॥ त्राहि सर्वांश्चतुर्वक्त्र
पितामह नमोऽस्तु ते ॥ ४ ॥ ब्रह्मोवाच ॥ अन्धकान्नैव शक्तोऽहं त्रातुं वै सुरसत्तमाः ॥ भवं शर्वं महादेवं व्रजामः शरणार्थिनः ॥ ५ ॥ किन्तु
पूर्वं मया दत्तो वरस्तस्य सुरोत्तमाः ॥ अवध्यस्त्वं हि भविता न शरीरं स्पृशेन्महीम् ॥ ६ ॥ तस्यैवं बलिनस्त्वेको हन्ता रुद्रः परन्तपः ॥तत्र
गच्छामहे सर्वे कैलासनिलयं प्रभुम् ॥ ७ ॥ एवमुक्त्वा ययौ ब्रह्मा सदेवो भवसन्निधौ ॥ तस्य सन्दर्शनाद्रुद्रः प्रत्युत्थानादिकाः क्रियाः ॥८॥
कृत्वाभ्युवाच देवेशो ब्रह्माणं भुवनेश्वरम् ॥ शम्भुरुवाच ॥ किं कार्यं देवताः सर्वा आगता मम सन्निधौ ॥ ९ ॥ येनाहं तत्करोम्याशु आज्ञा
कार्या हि सत्वरम् ॥ रक्षस्व देव बलिनस्त्वन्धकाद्दुष्टचेतसः ॥ १० ॥ यावद्देव सुराः सर्वे शंसन्ति परमेष्ठिनः ॥ तावत्सैन्येन महता तत्र
चान्धक आययौ ॥११॥ बलेन चतुरङ्गेण हन्तुकामो भवं मृधे ॥ तस्य भार्यां गिरिसुतां हन्तुमिच्छन्ससाधनः ॥ १२ ॥ तं दृष्ट्वा सहसायान्तं
देवो दैत्यं प्रहारिणम् ॥ सन्नह्य सहसा देवा रुद्रस्यानुचराभवन् ॥ १३ ॥ रुद्रोऽपि वासुकिं ध्यात्वा तक्षकं च धनञ्जयम् ॥ वलयं कटिसूत्रं च
चक्रार परमेश्वरः ॥ १४ ॥ नीलनामा तु दैत्येन्द्रो हस्ती भूत्वा भवान्तिकम् ॥ आगतस्त्वरितः शत्रुर्हस्तीवाद्भुतरूपवान् ॥ १५ ॥ स
ज्ञातो नन्दिना दैत्यो वीरभद्राय दर्शितः ॥ वीरभद्रोऽपि सिंहेन रूपेणाहत्य तं द्रुतम् ॥ १६ ॥ तस्य कृत्तिं विदार्याशु कारिणस्त्वञ्जनप्रभाम्॥
रुद्रायार्पितवान्सोऽपि तमेवाम्बरमावृणोत् ॥१७॥ ततःप्रभृति रुद्रोऽपि गजचर्मपटोऽभवत् ॥ गजचर्म्मपटो भूत्वा भुजङ्गाभरणोज्ज्वलः ॥१८॥

आदाय त्रिशिखं शूलं सगणोऽन्धकमान्वियात् ॥ ततः प्रववृते युद्धं देवदानवयोर्महत् ॥ १९ ॥ इन्द्राद्या लोकपालास्तु स्कन्दः सेनापति
स्तथा ॥ सर्वे देवगणाश्चान्ये युयुधुः समरे तदा ॥ २० ॥ तद्दृष्ट्वा नारदस्तूर्णं ययौ नारायणं प्रति ॥ शशंस च महद्युद्धं कैलासे दानवैः
सह ॥ २१ ॥ तच्छ्रुत्वा चक्रमादाय गरुडस्थो जनार्दनः ॥ तमेव देशमागत्य युयुधे दानवैः सह ॥ २२ ॥ आगत्य च ततो देवा
हरिणाप्यायिता रणे ॥ विषण्णवदनाः सर्वे पलायनपराभवन् ॥२३ ॥ तत्र भग्नेषु देवेषु स्वयं रुद्रोऽन्धकं ययौ ॥ तत्र तेन महद्युद्धमभवल्लोमहर्ष
णम् ॥२४॥ तत्र देवोऽप्यसौ दैत्यं त्रिशूलेनाहनद्भृशम् ॥ तस्याहतस्य यद्रक्तमपतद्भूतले किल ॥ २५ ॥ तत्रान्धका असंख्याता बभूवुरपरे
भृशम् ॥ तद्दृष्ट्वा महदाश्चर्यं रुद्रो मूलान्धकं मृधे॥२६॥गृहीत्वा त्रिशिखाग्रेण ननर्त्त परमेश्वरः ॥ इतरेऽप्यन्धकाः सर्वे चक्रेण परमेष्ठिना ॥२७॥
नारायणेन निहतास्तत्र येऽन्ये समुत्थिताः ॥ असृग्धारातुषारैस्तु शूलप्रोतस्य चासकृत् ॥२८॥अनारतं समुत्तस्थौ ततो रुद्रो रुषान्वितः ॥
तस्य क्रोधेन महता मुखाज्ज्वाला विनिर्ययौ ॥ २९ ॥ तद्रूपधारिणी देवी या तां योगेश्वरीं विदुः ॥ स्वरूपधारिणी चान्या विष्णुनापि विनिर्मि
ता ॥ ३० ॥ ब्रह्मणा कार्त्तिकेयेन इन्द्रेण च यमेन च ॥ वराहेण च देवेन विष्णुना परमेष्ठिना ॥ ३१ ॥ पातालोद्धारणं रूपं तस्या देव्या
विनिर्ममे ॥ माहेश्वरी च माहेन्द्री इत्येता अष्ट मातरः ॥३२ ॥ कारणं यस्य यत्प्रोक्तं क्षेत्रज्ञेनावधारितम् ॥ शरीरं देवतानां तु तदिदं कीर्त्तितं
मया ॥३३ ॥ कामः क्रोधस्तथा लोभो मदो मोहोऽथ पञ्चमः ॥ मात्सर्यं षष्ठमित्याहुः पैशुन्यं सप्तमं तथा ॥३४॥ अनसूयाष्टमी ज्ञेया इत्येता
अष्ट मातरः ॥ कामं योगीश्वरीं विद्धि क्रोधो माहेश्वरीं तथा ॥३५॥ लोभस्तु वैष्णवी प्रोक्ता ब्रह्माणी मद एव च ॥ मोहः स्वयम्भूः कौमारी
मात्सर्यं चेन्द्रजां विदुः ॥३६ ॥ यमदण्डधरा देवी पैशुन्यं स्वयमेव च ॥ अनसूया वराहाख्या इत्येताः परिकीर्तिताः ॥ ३७ ॥ कामादिगण
एषोऽयं शरीरं परिकीर्त्तितः ॥ जग्राह मूर्तिं तु तथा यथा ते कीर्त्तितं मया ॥३८॥ एताभिर्देवताभिश्च तस्य रक्तेऽतिशोषिते ॥ क्षयं गतासुरी
माया स च सिद्धोऽन्धकोऽभवत् ॥३९॥ एतत्ते सर्वमाख्यातमात्मविद्यामृतं मया ॥ य एतच्छृणुयान्नित्यं मातॄणामुद्भवं शिवम् ॥४०॥ तस्य
ताः सर्वतो रक्षां कुर्वन्त्यनुदिनं नृप ॥ यश्चैतत्पठते जन्म मातॄणां पुरुषोत्तम ॥४१ ॥ स धन्यः सर्वथा लोके शिवलोकं च गच्छति ॥ तासां च

ब्रह्मणा दत्ता त्वष्टमी तिथिरुत्तमा ॥४२॥ एताः सम्पूजयेद्भक्त्या बिल्वाहारो नरः सदा ॥ तस्य ताः परितुष्टाः स्युः क्षेमारोग्यं ददति च॥४३॥
इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्यानेऽष्टमात्र्युत्पत्तिर्नाम सप्तविंशोऽध्यायः ॥२७॥ अथ दुर्गाया उत्पत्तिः ॥ प्रजापाल उवाच॥
कथं माया समुत्पन्ना दुर्गा कात्यायनी शुभा ॥ आदिक्षेत्रे स्थिता सूक्ष्मा पृथङ्मूर्त्या व्यजायत ॥ १॥ महातपा उवाच ॥ आसीद्राजा पुरा
राजन् सिन्धुद्वीपः प्रतापवान् ॥ वरुणांशो महाराज सोऽरण्ये तपसि स्थितः ॥ २ ॥ पुत्रो मे शक्रनाशाय भवेदिति नराधिपः ॥ एवं कृतमतिः
सोऽथ महता तपसा स्वकम् ॥ ३ ॥ कलेवरं स्थिरो भूत्वा शोषयामास सुव्रत ॥ प्रजापाल उवाच ॥ कथं तस्य द्विजश्रेष्ठ शक्रेणापकृतं
भवेत् ॥४॥यनासौ तद्विनाशाय पुत्रमिच्छन् व्रते स्थितः ॥ महातपा उवाच ॥ सोऽन्यजन्मनि पुत्रोऽभूत्त्वष्टुर्बलभृतां वरः ॥५॥ अवध्यः सर्व
शस्त्रौघैरपां फेनेन नाशितः ॥ जलफेनेन निहतस्तस्मिँल्लयमवाप्तवान् ॥ ६ ॥ पुनर्ब्रह्मान्वये जातः सिन्धुद्वीपः प्रतापवान् ॥ स तेपे परमं तीव्रं
शक्रवैरमनुस्मरन् ॥७॥ ततः कालेन महता नदी वेत्रवती शुभा॥ मानुषं रूपमास्थाय सालङ्कारं मनोरमम् ॥८॥ आजगाम यतो राजा तेपे
स परमं तपः ॥ तां दृष्ट्वा रूपसम्पन्नां स राजा क्षुब्धमानसः॥९॥ उवाच कासि सुश्रोणि सत्यं कथय भामिनि॥नद्युवाच॥अहं जलपतेः पत्नी
वरुणस्य महात्मनः॥१०॥नाम्ना वेत्रवती एषा त्वामिच्छन्तीह चागता॥साभिलाषां परस्त्रीं च भजमानां विसर्जयेत्॥११॥स पापः पुरुषो ज्ञेयो
ब्रह्महत्यां च विन्दति ॥ एवं ज्ञात्वा महाराज भजमानां भजस्व माम् ॥१२॥ एवमुक्तस्तया राजा साभिलाषोपभुक्तवान्॥तस्य सद्योऽभवत्पुत्रो
द्वादशार्कसमप्रभः ॥१३॥ वेत्रवत्युदरे जातो नाम्ना वेत्रासुरोऽभवत्॥ बलवानतितेजस्वी प्राग्ज्योतिषपतिस्त्वभूत्॥१४॥स कालेन युवा जातो
बलवान्दृढविक्रमः ॥ महायोगेन संयुक्तो जिगायेमां वसुन्धराम् ॥ सप्तद्वीपवतीं पश्चान्मेरुपर्वतमारुहत् ॥ १५॥ तत्रेन्द्रं प्रथमं जिग्ये पश्चादग्निं
यमं ततः ॥ इन्द्रो भग्नो गतः सोऽग्निमग्निर्भग्नो यमं ययौ ॥ यमो निर्ऋतिमागच्छन्निर्ऋतिर्वरुणं ययौ ॥ १६ ॥ इन्द्रादिभिरुपेतस्तु वरुणो
वायुमन्वगात् ॥ वायुर्धनपतिं त्वागात्सर्वैरिन्द्रादिभिः सह ॥१७॥धनदोऽपि स्वकं मित्रमीशं देवैः समन्वितः ॥ इयाय गदया सोऽपि दानवो
बलगर्वितः ॥ १८ ॥ गदामादाय दुद्राव शिवलोकं प्रति प्रभो ॥ शिवोऽप्यवध्यं तं मत्वा देवान् गृह्यन्ययौ पुरीम् ॥ १९ ॥ ब्रह्मणः

सुरसिद्धार्थैर्वन्दिता पुण्यकारिभिः ॥ तत्र ब्रह्मा जगत्स्रष्टा विष्णुपादोद्भवे जले ॥२०॥ नियमेन च संयुक्तो जपन्नन्तर्जले शुभे ॥ क्षेत्रज्ञमायां
गायत्रीं ततो देवा विचुक्रुशुः ॥ २१ ॥ त्राहि प्रजापते सर्वान्देवानृषिवरानपि ॥ असुराद्भयमापन्नान्त्राहि त्राहीत्यचादयत् ॥२२॥ एवमुक्तस्तदा
ब्रह्मा दृष्ट्वा देवांस्तदागतान् ॥ चिन्तयामास देवस्य मायेयं विगतं जगत् ॥२३॥ नासुरा न च रक्षोऽत्र मायेयं कीदृशी मता ॥ एवं चिन्त
यतस्तस्य प्रादुरासीदयोनिजा ॥ २४ ॥ शुक्लाम्बरधरा कन्या स्रक्किरीटोज्ज्वलानना ॥ अष्टभिर्बाहुभिर्युक्ता दिव्यप्रहरणोद्यता ॥ २५ ॥
चक्रं शंखं गदां पाशं खड्गं घण्टां तथा धनुः ॥ धारयन्ती तथा चान्यान्बद्धतूणा जलाद्बहिः ॥ २६ ॥ निश्चक्राम महायोगा सिंहवाहनवेगिता॥
युयुधे चासुरान्सर्वानेकैव बहुधा स्थिता ॥ २७ ॥ दिव्यं वर्षसहस्रं तु दिव्यैरस्त्रैर्महाबला ॥ युद्धा कालात्यये देव्या हतो वेत्रासुरो रणे ॥२८॥
ततः किलकिलाशब्दो देवसैन्येऽभवन्महान् ॥ हते वेत्रासुरे भमि तदा सर्वे दिवौकसः ॥ २९ ॥ प्रणेमुर्जय युद्धे त्वामित्थमीशः स्तुतिं
जगौ ॥ महेश्वर उवाच ॥ जयस्व देवि गायत्रि महामाये महाप्रभे ॥ ३० ॥ महादेवि महाभागे महासत्त्वे महोत्सवे ॥ दिव्यगन्धानुलिप्ताङ्गि
दिव्यस्रग्दामभूषिते ॥ ३१ ॥ वेदमातर्नमस्तुभ्यमक्षरस्थे महेश्वरि ॥ त्रिलोकस्थे त्रितत्त्वस्थे त्रिवह्निस्थे त्रिशूलिनि ॥ ३२ ॥ त्रिनेत्रे भीम
वक्त्रे च भीमनेत्रे भयानके ॥ कमलासनजे देवि सरस्वति नमोऽस्तु ते ॥ ३३ ॥ नमः पङ्कजपत्राक्षि महामायेऽमृतस्रवे ॥ सर्वगे सर्वभूतेशि
स्वाहाकारे स्वधेऽम्बिके ॥ ३४ ॥ सम्पूर्णे पूर्णचन्द्राभे भास्वराङ्गे भवोद्भवे ॥ महाविद्ये महावेद्ये महादैत्यविनाशिनि ॥ ३५ ॥ महाबुद्ध्यु
द्भवे देवि वीतशोके किरातिनि ॥ त्वं नीतिस्त्वं महाभागे गीस्त्वं त्वं गौस्त्वमक्षरम् ॥ ३६ ॥ त्वं धीस्त्वं श्रीस्त्वमोङ्कारस्तत्त्वे चापि परि
स्थिता ॥ सर्वसत्त्वहिते देवि नमस्ते परमेश्वरि ॥ ३७ ॥ इत्येवं संस्तुता देवी भवेन परमेष्ठिना ॥ देवैरपि जयेत्युच्चैरुक्ता सा परमेश्वरी॥३८॥
यावदास्ते चतुर्वक्त्रस्तावदन्तर्जलाद्बहिः ॥ निश्चक्राम ततो देवीं कृतकृत्यां ददर्श सः ॥३९॥ तां दृष्ट्वा देवकार्यं च सिद्धं मत्वा पितामहः ॥
भविष्यं कार्यमुद्दिश्य ततो वचनमब्रवीत् ॥ ४० ॥ ब्रह्मोवाच ॥ इयं देवी वरारोहा यातु शैलं हिमालयम् ॥ तत्र यूयं सुराः सर्वे गत्वा नंदत
मा चिरम् ॥ ४१ ॥ नवम्यां च सदा पूज्या इयं देवी समाधिना ॥ वरदा सर्वलोकानां भविष्यति न संशयः ॥ ४२ ॥ नवम्यां यस्तु

पिष्टाशी भविष्यति हि मानवः ॥ नारी वा तस्य सम्पन्नं भविष्यति मनोगतम् ॥ ४३ ॥ यश्च स्वयं सदा प्रातरिदं स्तोत्रं पठिष्यति ॥ त्वयेरितं महादेव तस्य देव्या समं भवान् ॥ ४४ ॥ वरदो देव सर्वासु आपत्स्वप्युद्धरेत्स्वयम् ॥ एवमुक्त्वा भवं ब्रह्मा पुनर्देवीं स चाब्रवीत् ॥ ४५ ॥ त्वया देवि महाकार्यं कर्त्तव्यं चान्यदस्ति नः ॥ भविष्यं महिषाख्यस्य असुरस्य विनाशनम् ॥४६॥ एवमुक्त्वा ततो ब्रह्मा सर्वे देवाश्च पार्थिव ॥ यथागतं ततो जग्मुर्देवीं स्थाप्य हिमे गिरौ ॥४७॥ संस्थाप्य नन्दिता यस्मात्तस्मान्नन्दाऽभवत्तु सा ॥ यश्चेदं शृणुयाज्जन्म देव्या यश्च स्वयं पठेत् ॥ ४८ ॥ सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छति ॥ ४९ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्याने दुर्गादेव्युत्पत्तिर्नामाष्टाविंशोऽध्यायः ॥ २८ ॥ अथ दिगुत्पत्तिः ॥ महातपा उवाच ॥ शृणु राजन्नवहितः प्रजापाल कथामिमाम् ॥ यदा दिशः समुत्पन्नाः श्रोत्रेभ्यः पृथिवीपते ॥ १ ॥ ब्रह्मणः सृजतः सृष्टिमादिसर्गे समुत्थिते ॥ चिन्ताभून्महती का मे प्रजाः सृष्टा धारिष्यति ॥ २ ॥ एवं चिन्तयतस्तस्य अवकाशं व्रजन्त्विह ॥ प्रादुर्बभूवुः श्रोत्रेभ्यो दशकन्या महाप्रभाः ॥ ३ ॥ पूर्वा च दक्षिणा चैव प्रतीची चोत्तरा तथा ॥ ऊर्द्ध्वाधरा च षण्मुख्याः कन्या ह्यासंस्तदा नृप ॥ ४ ॥ तासां मध्ये चतस्रस्तु कन्याः परमशोभनाः ॥ रूपवत्यो महाभागा गाम्भीर्येण समन्विताः ॥ ५ ॥ ता ऊचुः प्रणयाद्देवं प्रजापतिमकल्मषम् ॥ अवकाशं तु नो देहि देवदेव प्रजापते ॥ ६ ॥ तिष्ठामो यत्र वा सर्वा भर्त्तृभिः सहिताः सुखम् ॥ पतींश्चैव महाभागान्देहि नोऽव्यक्तसम्भव ॥ ७ ॥ ब्रह्मोवाच ॥ ब्रह्माण्डमेतत्सुश्रोण्यः शतकोटिप्रविस्तरम् ॥ तस्यान्ते स्वेच्छया तुष्टा उष्यतां मा विलम्बथ ॥ ८ ॥ भर्तृंश्च वः प्रयच्छामि सृष्ट्वा रूपवतोऽनघान् ॥ यथेष्टं गम्यतां देशो यस्यै यो रोचतेऽधुना ॥ ९ ॥ एवमुक्ताश्च ताः सर्वा यथेष्टं प्रययुस्तदा ॥ ब्रह्मा ससर्ज तूर्णं ताँल्लोकपालान्महाबलान् ॥ १० ॥ सृष्ट्वा तु लोकपालांस्तांस्ताः कन्याः पुनराह्वयत् ॥ विवाहं कारयामास ब्रह्मा लोकपितामहः ॥ ११ ॥ एकामिन्द्राय स प्रादादग्नयेऽन्यां यमाय च ॥ निर्ऋताय च देवाय वरुणाय महात्मने ॥ १२ ॥ वायवे धनदेशाय ईशानाय च सुव्रत ॥ ऊर्द्ध्वां स्वयमधिष्ठाय शेषायाधो व्यवस्थिताम् ॥ १३ ॥ एवं दत्त्वा पुनर्ब्रह्मा तिथिं प्रादाद्दिशां तथा ॥ दशमी च तिथिस्तासामतीव दयिताभवत् ॥ १४॥ तस्यां दध्यशनो यस्तु सुव्रतो ना भविष्यति ॥

तस्य पापक्षयं तास्तु कुर्वन्त्यहरहर्नृप ॥ १५ ॥ यश्चैतच्छृणुयाज्जन्म दिशां नियतमानसः ॥ स प्रतिष्ठामवाप्नोति ब्रह्मलोके न संशयः ॥ १६ ॥
इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्याने दिग्उत्पत्तिर्नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ अथ धनदोत्पत्तिः ॥ महातपा उवाच ॥
शृणु चान्यां वसुपतेरुत्पत्तिं पापनाशिनीम् ॥ यथा वायुशरीरस्थो धनदः सम्बभूव ह ॥ १ ॥ आद्यं शरीरं यत्तस्मिन्वायुरन्तःस्थितोऽ
भवत् ॥ प्रयोजनान्मूर्त्तिमत्त्वमातिष्ठत्क्षेत्रदेवता ॥ २ ॥ तत्र मूर्त्तस्य वायोस्तु उत्पत्तिः कीर्त्तिता मया ॥ तां शृणुष्व महाभाग कथ्यमानां मया
नघ ॥ ३ ॥ ब्रह्मणः सृष्टिकामस्य मुखाद्वायुर्विनिर्ययौ ॥ प्रचण्डशर्करावर्षी तं ब्रह्मा प्रत्यषेधयत् ॥४॥ मूर्तो भव त्वं शान्तश्च तेनोक्तो मूर्त्ति
मानभूत् ॥ सर्वेषां चैव देवानां यद्वित्तं फलमेव च ॥ ५ ॥ तत्सर्वं पाहि येनोक्तं तस्माद्धनपतिर्भवान् ॥ तस्य ब्रह्मा ददौ तुष्टस्तिथिमेका
दशीं प्रभुः ॥ ६ ॥ तस्यामनग्निपक्वाशी यो भवेन्नियतं शुचिः ॥ तस्यापि धनदो देवस्तुष्टः सर्वं प्रयच्छति ॥ ७ ॥ एषा धनपतेर्मूर्त्तिः सर्व
किल्बिषनाशिनी ॥ य एतां शृणुयाद्भक्त्या पुरुषः पठतेऽपि वा ॥ सर्वकामानवाप्नोति स्वर्गलोकं च गच्छति ॥ ८ ॥ इति श्रीवराहपुराणे
आदिकृतवृत्तान्ते महातपउपाख्याने धनदोत्पत्तिर्नाम त्रिंशोऽध्यायः ॥ ३० ॥ अथ विष्णूत्पत्तिः ॥ महातपा उवाच ॥ मनोर्नाम मनुत्वं च
पदेतत्पठ्यते किल ॥ प्रयोजनवशाद्विष्णुरसावेव तु मूर्त्तिमान् ॥ १ ॥ योऽसौ नारायणो देवः परात्परतरो नृप ॥ तस्य चिन्ता समुत्पन्ना सृष्टिं
प्रति नरोत्तम ॥ २ ॥ सृष्टा चेयं मया सृष्टिः पालनीया मयैव ह ॥ कर्मकाण्डं त्वमूर्त्तेन कर्तुं नैवेह शक्यते ॥ ३ ॥ तस्मान्मूर्तिं सृजाम्येकां
यया पाल्यमिदं जगत् ॥ एवं चिन्तयतस्तस्य सत्याभिध्यायिनो नृप ॥ ४ ॥ प्राक्सृष्टिजातं राजन्वै मूर्त्तिमत्तत्पुरो बभौ ॥ पुरोभूतस्तत
स्तस्मिन्देवो नारायणः स्वयम् ॥ ५ ॥ प्रविशन्तं ददर्शाथ त्रैलोक्यं तस्य देहतः ॥ ततः सस्मार भगवान्वरदानं पुरातनम् ॥ ६ ॥
वागादीनां ततस्तुष्टः प्रादात्तस्य पुनर्वरम् ॥ सर्वज्ञः सर्वकर्ता त्वं सर्वलोकनमस्कृतः ॥ ७ ॥ त्रैलोक्यप्रतिपालश्च भव विष्णुः
सनातनः ॥ देवानां सर्वदा कार्यं कर्त्तव्यं ब्रह्मणः सदा ॥ ८ ॥ सर्वज्ञत्वं च भवतु तव देव न संशयः ॥ एवमुक्त्वा ततो देवः
प्रकृतिस्थो बभूव ह ॥ ९ ॥ विष्णुरप्यधुना पूर्वां बुद्धिं सस्मार ह प्रभुः ॥ तदा सञ्चिन्त्य भगवान्योगनिद्रां महातपाः ॥ १० ॥

तस्या संस्थाप्य भगवानिन्द्रियार्थोद्भवाः प्रजाः ॥ ध्यात्वा परेण रूपेण ततः सुष्वाप वै प्रभुः ॥ ११ ॥ तस्य सुप्तस्य जठरा
न्महत्पद्मं विनिःसृतम् ॥ सप्तद्वीपवती पृथ्वी सप्तसमुद्रा सकानना ॥ १२ ॥ तस्य रूपस्य विस्तारं पातालतलसंस्थितम् ॥ कर्णिकायां तथा
मेरुस्तन्मध्ये ब्रह्मणो भवः ॥१३ ॥ एवं दृष्ट्वा परं तस्य शरीरस्य तु सम्भवम् ॥ मुमुदे तच्छरीरस्थो वायुर्वायुं ससर्ज ह ॥१४॥ अविद्या विजयं
चेमं शङ्खरूपेण धारय ॥ अज्ञानच्छेदनार्थाय खड्गं तेऽस्तु सदा करे ॥१५॥ कालचक्रमयं घोरं चक्रं तद्धारयाच्युत ॥ अधर्मराजघातार्थं गदां
धारय केशव ॥ १६ ॥ मालेयं भूतमाता ते कण्ठे तिष्ठतु सर्वदा ॥ श्रीवत्सकौस्तुभौ चेमौ चन्द्रादित्यच्छलेन ह ॥ १७॥ मारुतस्ते गतिर्वीर
गरुत्मांस्च कीर्तितः ॥ त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदाश्रये ॥ १८ ॥ द्वादशी च तिथिस्तेऽस्तु कामरूपी च जायते॥ घृताशनो
भवेद्यस्तु द्वादश्यां त्वत्परायणः ॥ १९ ॥ स स्वर्गवासी भवतु पुमान्स्त्री वा विशेषतः ॥ स च विष्णुस्तदाख्यातो मूर्तयो देवदानवाः ॥२० ॥
हन्ति पाति शरीराणि सृजत्यन्यानि चात्मनः ॥ युगे युगे सर्वगोऽयं वेदान्तपुरुषो ह्यतो ॥२१ ॥ न हीनबुद्ध्या वक्तव्यो मनुष्योऽयं कदाचन ॥
य एव शृणुयात्सर्गं वैष्णवं पापनाशनम् ॥ २२ ॥ स कीर्त्तिमिह सम्प्राप्य स्वर्गलोके महीयते ॥ २३ ॥ इति श्रीवराहपुराणे आदिकृत
वृत्तान्ते महातपउपाख्याने परापरनिर्णयो नाम एकत्रिंशोऽध्यायः ॥३१॥ अथ धर्मोत्पत्तिः ॥ महातपा उवाच॥ अथोत्पत्तिं प्रवक्ष्यामि धर्मस्य
महतो नृप ॥ माहात्म्यं च तिथिं चैव तन्निबोध नराधिप ॥ १ ॥ पूर्वं ब्रह्माव्ययः शुद्धः परादपरसंज्ञितः ॥ स सिसृक्षुः प्रजास्त्वादौ पालनं च
विचिन्तयन् ॥ २ ॥ तस्य चिन्तयतस्त्वङ्गाद्दक्षिणाच्छ्वेतकुण्डलः ॥ प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः ॥ ३ ॥ तं दृष्ट्वोवाच भगवांश्चतु
ष्पादं वृषाकृतिम् ॥ पालयेमाः प्रजाः साधो त्वं ज्येष्ठो जगतो भव ॥४॥ इत्युक्तः समवस्थोऽसौ चतुष्पात्सत्यात्कृते युगे॥ त्रेतायां त्रिपदश्चासौ
द्विपदो द्वापरेऽभवत्॥ ५॥कलावेकेन पादेन प्रजाः पालयते प्रभुः ॥ षड्भेदो ब्राह्मणानां स त्रिधा क्षत्रे व्यवस्थितः॥६॥द्विधा वैश्ये तथा शूद्रे
एकः सर्वगतः स्थितः ॥ रसातलेषु सर्वेषु द्वीपवर्षेष्वयं प्रभुः॥७॥ गुणद्रव्यक्रियाजातिचतुष्पात्संप्रकीर्त्तितः॥त्रिशृङ्गोऽसौ स्मृतो वेदे सप्तांहित
पदक्रमः ॥ ८ ॥ तथा आद्यन्त ओङ्काराद्विशिराः सप्तहस्तवान् ॥ उदात्तादित्रिभिर्बद्ध एवं धर्मो व्यवस्थितः ॥ ९ ॥ स धर्मः पीडितः पूर्वं

सोमेनाद्भुतकर्मणा ॥ तारां जिघृक्षुणा पत्नीं भ्रातुराङ्गिरसस्य च ॥ १० ॥ सोऽपायाद्दंशितस्तेन बलिना क्रूरकर्मणा ॥ अरण्यं गहनं घोर
माविवेश तदा प्रभुः ॥ ११ ॥ तस्मिन्गते सुराः सर्वे असुराणां तु पत्तयः ॥ जिघृक्षन्तस्ततश्शोकाति चक्रमुर्द्धर्मवञ्चिताः ॥ १२॥ असुरा अपि
तद्वच्च सुरवेश्मनि बभ्रमुः ॥ निर्मर्यादे तथा जाते धर्मनाशे च पार्थिव ॥ १३ ॥ देवासुरा युयुधिरे सोमदोषेण कोपिताः ॥ स्त्रीहेतोश्च महा
भाग विविधायुधपाणयः ॥ १४ ॥ तान्दृष्ट्वा युध्यतो देवानसुरैः सह कोपितान् ॥ नारदः प्राह सङ्गम्य पितरं प्रति हर्षितः ॥ १५ ॥ स हंस
यानमारुह्य सर्वलोकपितामहः ॥ निवारयामास तदा कस्यार्थे युद्धमद्य वः ॥ १६ ॥ सर्वे शशंसुः सोमं तु स तु बुद्ध्या स्वकं सुतम् ॥ पीड
नाद्भयातं तु गहनं वनमाश्रितम् ॥ १७ ॥ ततो ब्रह्मा ययौ तत्र देवासुरयुतेऽन्नसा ॥ ददर्श च सुरैः सार्द्धं चतुष्पादं वृषाकृतिम् ॥ १८ ॥
चरन्तं शशिसङ्काशं दृष्ट्वा देवानुवाच ह ॥ ब्रह्मोवाच ॥ अयं मे प्रथमः पुत्रः पीडितः शशिना भृशम् ॥ १९ ॥ पत्नीं जिघृक्षुणा भ्रातुर्द्धर्म
संज्ञो महामुनिः ॥ इदानीं तोषयध्वं तं सर्वं एव सुरासुराः ॥ २० ॥ येन स्थितिर्भवेत भवति समं देवा सुरा इति ॥ ततः सर्वे स्तुतिं चक्रुस्तस्य
देवस्य हर्षिताः ॥ २१ ॥ विदित्वा ब्रह्मणो वाक्यात्सम्पूर्णशशिसन्निभम् ॥ देवा ऊचुः ॥ नमोऽस्तु शशिसङ्काश नमस्ते जगतः पते ॥२२॥
नमोऽस्तु देवरूपाय स्वर्गमार्गप्रदर्शक ॥ कर्ममार्गस्वरूपाय सर्वगाय नमो नमः ॥२३॥ त्वयैव पाल्यते पृथ्वी त्रैलोक्यं च त्वयैव हि ॥ जन
स्तपस्तथा सत्यं त्वया सर्वं तु पाल्यते ॥२४॥ न त्वया रहितं किंचिज्जगत्स्थावरजङ्गमम्॥ विद्यते त्वद्विहीनं तु सद्यो नश्यति वै जगत् ॥२५॥
त्वमात्मा सर्वभूतानां सतां सत्त्वस्वरूपवान् ॥ राजसीनां रजस्त्वं च तामसीनां तमोमयः ॥ २६ ॥ चतुष्पादो भवान्वेदश्चतुःशृङ्ग
स्त्रिलोचनः ॥ सप्तहस्तस्त्रिबन्धश्च वृषरूप नमोऽस्तु ते ॥ २७ ॥ त्वया हीना वयं देव सर्वे उन्मार्गवर्तिनः ॥ तन्मार्गं यच्छ मूढानां त्वं हि नः
परमा गतिः ॥२८॥ एवं स्तुतस्तदा देवैर्वृषरूपी प्रजापतिः ॥ तुष्टः प्रसन्नमनसा शान्तचक्षुरभाषत ॥ २९ ॥ दृष्टमात्रास्तु ते देवाः स्वयं
धर्मेण चक्षुषा ॥ क्षणेन गतसम्मोहाः सम्यक्सद्धर्मसंहिताः ॥ ३० ॥ असुरा अपि तद्वच्च ततो ब्रह्माऽवदच्च तम् ॥ अद्यप्रभृति ते धर्म
तिथिरस्तु त्रयोदशी ॥ ३१ ॥ यस्तामुपोष्य पुरुषो भवन्तं समुपार्चयेत् ॥ कृत्वा पापसमाचारं तस्मान्मुंचाति मानवः ॥ ३२ ॥ यच्चारण्य

मिदं धर्म्म त्वया व्याप्तं चिरं प्रभो ॥ नाम्ना भविष्यति ह्येतद्धर्म्मारण्यमिति प्रभो ॥ २३ ॥ चतुस्त्रिपाद्द्वयेकपाच्च प्रभो त्वं कृतादिभिर्लक्ष्यसे
येन लोकैः ॥ तथा तथा कर्मभूमौ नभश्च प्रायो युक्तः स्वगृहं पाहि विश्वम् ॥ २४ ॥ इत्युक्तमात्रः प्रपितामहोऽधुना सुरासुराणामथ
पश्यतां नृप ॥ अदृश्यतामगमत्स्वालयांश्च जग्मुः सुराः सवृषा वीतशोकाः ॥ २५ ॥ धर्मोत्पत्तिं य इमां श्रावयीत पितॄञ्छ्राद्धे तर्पयीतैव
मेव ॥ त्रयोदश्यां पायसेन स्वशक्त्या स्वर्गं गत्वा देवसङ्घानुपेयात् ॥ २६ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते महातपउपाख्याने
धर्म्मोत्पत्तिर्नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ अथ रुद्रोत्पत्तिः ॥ महातपा उवाच ॥ अथापरां रुद्रसम्भूतिमाद्यां शृणुष्वेमां यत्नतः सोऽभ्यु
वाच ॥ महातपाः पातितो धर्म्मवृक्षः क्षमास्त्रधारी ऋषिरुग्रतेजाः ॥ १ ॥ जातः प्रजानां पतिरुग्रतेजा ज्ञानं परं तत्त्वभावं विदित्वा ॥ सृष्टिं
सिसृक्षुः क्षुभितोऽतिरोपादवृद्धिकाले जगतः प्रकामम् ॥ २ ॥ तपस्यतोन्तःस्थिरकीर्तिपुण्यो रजस्तमोध्वस्तगतिर्बभूव ॥
वरो वरेण्यो वरदः प्रतापी कृष्णारुणः पुरुषः पिङ्गनेत्रः ॥ ३ ॥ रुद्रस्त्वुक्तो ब्रह्मणा मा रुद त्वं रुद्रस्ततोऽसावभवत्पुराणः ॥ नयस्व सृष्टिं वितत
स्वरूपां भवान् समर्थोऽसि महानुभाव ॥ ४ ॥ इत्युक्तमात्रः सलिले ममज्ज मग्ने ससर्जातमभवाय दक्षः ॥ कस्थे तदा देववरेऽपि ते तु सृष्टिं
चक्रुर्मानसा ब्रह्मजाताः ॥ ५ ॥ तस्यां ततायां तु सुराधिपे तु पैतामहं यज्ञवरं प्रकामम् ॥ मग्नः पुरा यत्सलिले स रुद्र उत्सृज्य विश्वं तु सुरान्
सिसृक्षुः ॥६॥ सुश्राव यज्ञं सुरसिद्धयक्षानुपागतान्क्रोधवशं जगाम ॥ कन्यां च दितिं परिभाव्य केन सृष्टं जगन्मां व्यतिरिच्य मोहात् ॥७॥
हा हेति चोक्ते ज्वलनार्चिषस्तु निश्चेरुरास्यात्परिपिङ्गलस्य ॥ तत्राभवन्क्षुद्रपिशाचसङ्घा वेतालभूतानि च योगिसङ्घाः ॥८॥ घनं यदा तैर्विततं
वियच्च भूमिश्च सर्वाश्च दिशश्च लोकाः ॥ तदा स सर्वज्ञतया चकार धनुश्चतुर्विंशतिहस्तमात्रम् ॥९॥ गुणं त्रिवृतं च चकार रोपादादत्त दिव्ये
इषुधी शरांश्च ॥ ततश्च पूष्णो दशनानपातयद्भगस्य नेत्रे वृषणौ क्रतोश्च ॥ १० ॥ स विद्धबीजो व्यपयात्क्रतुश्च मार्गं वायुर्द्दारयन्यज्ञवाटात् ॥
देवाश्च सर्वे पशुतामुपेयुर्जग्मुश्च सर्वे प्रणतिं भवस्य ॥ ११ ॥ आगम्य तत्रैव पितामहस्तु भवं प्रतीतः सम्परिष्वज्य देवान् ॥ भक्त्योपेतानी
क्षयन्देवदेवान्विज्ञाय रुद्रेण कृतापकारान् ॥ १२ ॥ रुद्रं दृष्ट्वा देवदेवो जगाद मा तात कोपेन गतो हि यज्ञः ॥ इति ब्रह्मवचः श्रुत्वा रुद्रः

प्रोवाच कोपवान् ॥ १३ ॥ रुद्र उवाच ॥ सृष्टः पूर्वं भवताहं तवेमे कस्मान्न भागं परिकल्पयन्ति ॥ यज्ञोद्भवं तेन रूपं मयेमे वीतज्ञाना
विकृता देवदेव ॥ १४ ॥ ब्रह्मोवाच ॥ देवाः शम्भुं स्तुतिभिर्ज्ञानहेतोर्यजध्वमुच्चैरसुराश्च सर्वे ॥ येन रुद्रो भगवांस्तोषमेति सर्वज्ञता तोषमात्रा
दिह स्यात् ॥ १५ ॥ इत्युक्तास्तेन ते देवाः स्तुतिञ्चक्रुर्महात्मनः ॥ देवा ऊचुः ॥ नमो देवातिदेवाय त्रिणेत्राय महात्मने ॥ १६ ॥ रक्तपिङ्गल
नेत्राय जटामुकुटधारिणे ॥ भूतवेतालजुष्टाय महाभोगोपवीतिने ॥ १७ ॥ भीमाट्टहासवक्त्राय कपर्दिस्थाणवे नमः ॥ पूष्णो दन्तविनाशाय
भगनेत्रभिदे नमः ॥ १८ ॥ भविष्यवृषचिह्नाय महाभूतपते नमः ॥ भविष्यत्त्रिपुरान्ताय तथान्धकविनाशिने ॥ १९ ॥ कैलासवरवासाय
करिकृत्तिनिवासिने ॥ विकरालोर्द्ध्वकेशाय भैरवाय नमो नमः ॥२०॥ अग्निज्वालाकरालाय शशिमौलिकृते नमः ॥ भविष्यत्कृतकापालि व्रताय
परमेष्ठिने ॥२१॥ तथा दारुवनध्वंसकारिणे तिग्मशूलिने ॥ कृतकङ्कणभोगीन्द्रनीलकण्ठत्रिशूलिने ॥२२॥ प्रचण्डदण्डहस्ताय वडवाग्निमुखाय
च ॥ वेदान्तवेद्याय नमो यज्ञमूर्त्ते नमो नमः ॥२३॥ दक्षयज्ञविनाशाय जगद्भयकराय च ॥ विश्वेश्वराय देवाय शिव शम्भो भवाय च ॥२४॥
कपर्दिने करालाय महादेवाय ते नमः ॥ एवं देवैः स्तुतः शम्भुरुग्रधन्वा सनातनः ॥ २५ ॥ उवाच देवदेवोऽहं यत्करोमि तदुच्यते ॥ देवा
ऊचुः ॥ वेदशास्त्राणि विज्ञानं देहि नो भव मा चिरम् ॥ २६ ॥ यज्ञश्च सरहस्यो भो यदि तुष्टोऽसि नः प्रभो ॥ महादेव उवाच ॥ भवन्तः
पशवः सर्वे भवन्तु सहिता इति ॥ २७ ॥ अहं पतिश्च भवतां ततो मोक्षमवाप्स्यथ ॥ तथेति देवास्तं प्राहुस्ततः पशुपतिर्भवान् ॥ २८ ॥
ब्रह्मा पशुपतिं प्राह प्रसन्नेनान्तरात्मना ॥ चतुर्दशी ते देवेश तिथिरस्तु न संशयः ॥ २९ ॥ तस्यां तिथौ भवन्तं ये यजन्ति श्रद्धयान्विताः ॥
उपोष्य भोजनीयास्तु गोधूमान्नेन वै द्विजाः ॥ ३० ॥ तेषां त्वं तुष्टिमापन्नो देहि स्थानमनुत्तमम् ॥ ३१ ॥ एवमुक्तस्तथा रुद्रो ब्रह्मणाव्यक्त
जन्मना ॥ दन्तान्नेत्रे फलं प्रादाद्भगपूष्णोः क्रतोरपि ॥ ३२ ॥ परिज्ञानं च सकलं स प्रादादमरेष्वपि ॥ एवं रुद्रस्य सम्भूतिः सम्भूता ब्रह्मणः
पुरा ॥ ३३ ॥ अनेनैव प्रयोगेण देवानां पतिरुच्यते ॥ यथैतच्छृणुयान्नित्यं प्रातरुत्थाय मानवः ॥ ३४ ॥ सर्वपापविनिर्मुक्तो रुद्रलोकमवा
प्नुयात् ॥ इति श्रीवराहपुराणे महात० उपा० रुद्रोत्पत्तिर्नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ अथ पितृसर्गोत्पत्तिवर्णनम् ॥ महातपा उवाच ॥

॥ ३५ ॥

पितॄणां सम्भवं राजन्कथ्यमानं निबोध मे ॥ १ ॥ पूर्वं प्रजापतिर्ब्रह्मा सिसृक्षुर्विविधाः प्रजाः ॥ एकाग्रमनसः सर्वास्तन्मात्रा मनसो बहिः ॥
कृत्वा परमकं ब्रह्मा ध्यायन्सर्वेषु रूपकैः ॥ २ ॥ तस्यात्मनि तदा योगं गतस्य परमेष्ठिनः ॥ तन्मात्रा निर्ययुर्देहाद्धूम
वर्णकृततिविषः ॥ ३ ॥ पिबाम इति भाषन्तः सुरान्सोममिमिति स्म ह ॥ ऊर्ध्वं जिगमिषन्तो वै वियत्संस्थास्तपस्विनः ॥ ४ ॥ तान्दृष्ट्वा सहसा
ब्रह्मा तिर्यक्संस्थांस्तथोन्मुखान् ॥ भवन्तः पितरः सन्तु सर्वेषां गृहमेधिनाम् ॥ ५ ॥ ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ॥ इत्युक्त्वा
तु तदा ब्रह्मा तेषां पन्थानमाकरोत् ॥ ६ ॥ दक्षिणायनसंज्ञं तु पितॄणां च पितामहः ॥ तूष्णीं ससर्ज भूतानि तमूचुः पितरस्ततः ॥ वृत्तिं
नो देहि भगवन् यया विन्दामहे सुखम् ॥ ७ ॥ ब्रह्मोवाच ॥ अमावास्यादिनं वोऽस्तु तस्यां कुशतिलोदकैः ॥ तर्पिता मानुषैस्तृप्तिं परां
गच्छत नान्यथ ॥ ८ ॥ तिला देयास्तथैतस्यामुपोष्य पितृभक्तितः ॥ परमं तस्य संतुष्टा वरं यच्छत मा चिरम् ॥ ९ ॥ इति श्रीवराहपुराणे
आदिकृतवृत्तान्ते महातपउपाख्याने पितृसर्गस्थितिवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ अथ सोमोत्पत्तिस्थितिरहस्यम् ॥ महातपा
उवाच ॥ ब्रह्मणो मानसः पुत्रो ह्यत्रिर्नाम महायशाः ॥ तस्य पुत्रोऽभवत्सोमो दक्षजामातृताङ्गतः ॥ १ ॥ याः सप्तविंशतिः कन्या दाक्षायण्यः
प्रकीर्त्तिताः ॥ सोमपत्न्योऽतिमान्यांस्तास्तासां श्रेष्ठा तु रोहिणी ॥ २ ॥ तामेव रमते सोमो नेतरास्त्विति शुश्रुम ॥ इतराः प्रोचुरागत्य
चन्द्रस्यासमतां पितुः ॥ दक्षोऽप्यसकृदागत्य तमुवाच स नाकरोत् ॥ ३ ॥ समतां सोऽपि तं दक्षः शशापान्तर्हितो भव ॥ एवमुक्तः क्षयं
सोम अगमद्दक्षशापतः ॥ ४ ॥ देवा मनुष्याः पशवो नष्टे सोमे सवीरुधः ॥ क्षीणाभवंस्तदा सर्वा ओषध्यश्च विशेषतः ॥ ५ ॥ क्षयं गच्छाद्भि
रत्यर्थमोषधीभिः सुरर्षभाः ॥ मूलेषु वीरुधां सोमः स्थित इत्यूचुरातुराः ॥ ६ ॥ तेषां चिन्ताभवत्तीव्रा विष्णुं च शरणं ययुः ॥ भगवा
नाह तान्सर्वान्ब्रूत किं क्रियते मया ॥ ७ ॥ ते चोचुर्देव दक्षेण शप्तः सोमो विनाशितः ॥ तानुवाच तदा देवो मथ्यतां कल
शोदधिः ॥ ओषध्यः सर्वतो देवाः प्रक्षिप्याशु सुसंयतैः ॥ ८ ॥ एवमुक्त्वा ततो देवान्दध्यौ रुद्रं हरिः स्वयम् ॥ ब्रह्माणं च तथा दध्यौ वासुकिं
नेत्ररूपिणम् ॥ ९ ॥ ते सर्वे तत्र सहिता ममन्थुर्वरुणालयम् ॥ तस्मिन्सुमथिते जातः पुनः सोमो महीपते ॥ १० ॥ योऽसौ क्षेत्रज्ञ

संज्ञो वै देहेऽस्मिन्पुरुषः परः ॥ स एव सोमो मन्तव्यो देहिनां जीवसंज्ञकः ॥ ११ ॥ परोक्षया स मूर्तिं तु पृथक्सौम्यां प्रपेदिवान् ॥ तमेव
देवमनुजाः षोडशेमाश्च देवताः ॥ १२ ॥ उपजीवन्ति वृक्षाश्च तथैवौषधयः प्रभुम् ॥ रुद्रस्तमेव सकलं दधार शिरसा तदा ॥ १३ ॥ तदा
त्मिका भवन्त्यापो विश्वमूर्तिरसौ स्मृतः ॥ तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीं तिथिं प्रभुः॥ १४ ॥ तस्यामुपोषयेद्राजंस्तमर्थं प्रतिपादयेत् ॥
स चान्नाहारश्च भवेत्तस्य ज्ञानं प्रयच्छति ॥ कान्तिं पुष्टिं च राजेंद्र धनं धान्यं च केवलम् ॥ १५ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते
महातपउपाख्याने सोमोत्पत्तिस्थितिरहस्यं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥ अथ प्राचिनेतिहासवर्णनम् ॥ महातपा उवाच ॥ आदित्रेतासु
राजानो मणिजा ये प्रकीर्त्तिताः ॥ कथयिष्यामि तान्राजन्यत्र जातोऽसि पार्थिवः ॥ १ ॥ योऽसौ सुप्रभनामासीत्स त्वं राजन्कृते युगे ॥
जातोऽसि नाम्ना विख्यातः प्रजापालेति शोभनः ॥ २ ॥ शेषास्त्रेतायुगे राजन्भविष्यन्ति महाबलाः ॥ यो दीप्ततेजा मणिजः स शान्त इति
कीर्त्तितः ॥ ३ ॥ सुरश्मिर्भविता राजा शशकर्णो महाबलः ॥ शुभदर्शनः पाञ्चालो भविष्यति न संशयः ॥ ४ ॥ सुशान्तिरङ्गवंशे वै सुन्द
रोऽप्यङ्ग इत्युत ॥ सुन्दश्च मुचुकुन्दोऽभूत्सुद्युम्नस्तुरुरेव च ॥ ५ ॥ सुमनाः सोमदत्तस्तु शुभः संवरणोऽभवत् ॥ सुशीलो वसुदानस्त्ववसु
पतिः सुखदोऽभवत् ॥ ६ ॥ शम्भुः सेनापतिरभूत्कान्तो दशरथः स्मृतः ॥ सोमोऽभूज्जनको राजा एते त्रेतायुगे नृपाः ॥ ७ ॥ सर्वे भूमि
मिमां राजन् भुक्त्वा ते वसुधाधिपाः ॥ इष्ट्वा च विविधैर्यज्ञैर्दिवं प्राप्स्यन्त्यसंशयम् ॥ ८॥ वराह उवाच ॥ एवं श्रुत्वा स राजर्षिर्ब्रह्मविद्यामृतं
प्रभुः ॥ आख्यानं परमं प्रीतस्तपश्चर्तुमगाद्वनम् ॥ ९ ॥ ऋषिरध्यात्मयोगेन विहायेदं कलेवरम् ॥ ब्रह्मभूतोऽभवद्धात्रि हरौ लयमवाप
च ॥ १० ॥ वृन्दावनं च राजासौ तपोर्थं गतवान्प्रभुः ॥ तत्र गोविन्दनामानं हरिं स्तोतुमथारभत् ॥ ११॥ राजोवाच ॥ नमामि देवं जगतां
च मूर्त्तिं गोपेन्द्रमिन्द्रानुजमप्रमेयम् ॥ संसारचक्रक्रमणैकदक्षं पृथ्वीधरं देववरं नमामि ॥ १२ ॥ भवोदधौ दुःखशतोर्म्मिभीमे जरावर्त्ते कृष्ण
पातालमूले ॥ तदन्त एको ददते सुखं मे नमोऽस्तु ते गोपतयेऽप्रमेय ॥ १३ ॥ व्याध्यादियुक्तैः पुरुषैर्ग्रहैश्च सङ्क्लिष्टमानं पुनरेव देव ॥
नमोऽस्तु ते युद्धरते महात्मञ्जनार्दनोपेन्द्र समस्तवन्द्य ॥१४॥ त्वमुत्तमः सर्वविदां सुरेश त्वया ततं विश्वमिदं समस्तम् ॥ गोपेन्द्र मां पाहि

महानुभाव भवाद्भीतं तिम्मरथाङ्गपाणे ॥ १५ ॥ परोऽसि देवः प्रवरः सुराणां पुराणरूपोऽसि शशिप्रकाशः ॥ हुताशवक्त्राच्युत तीव्रभाव
गोपेन्द्र मां पाहि भवे पतन्तम् ॥ १६ ॥ संसारचक्रक्रमणान्यनेकान्याविर्भवन्त्यच्युत देहिनां यत् ॥ त्वन्मायया मोहितानां सुरेश कस्ते
माया तरते द्वन्द्वधामा ॥ १७ ॥ अगोत्रमस्पर्शमरूपगन्धमनामनिर्देशमजं वरेण्यम् ॥ गोपेन्द्र ये त्वामुपासन्ति धीरास्ते मुक्तिभाजो भवधर्म
मुक्ताः ॥ १८ ॥ शब्दातिगं व्योमरूपं विमूर्त्ति विकर्मिणं शुभभावं वरेण्यम् ॥ चक्राब्जपाणिं तु तथोपचाराडुक्तं पुराणे सततं नमामि॥१९॥
त्रिविक्रमं क्रीतजगत्त्रयं च चतुर्मूर्त्तिं विश्वजगत्क्षितीशम् ॥ शम्भुं विभुं भूतपतिं सुरेशं नमाम्यहं विष्णुमनन्तमूर्त्तिम् ॥ २० ॥ त्वं देव सर्वाणि
चराचराणि सृजस्यथो संहरसे त्वमेवं ॥ मां मुक्तिकामं नय देव शीघ्रं यस्मिन्गता योगिनो नोपयान्ति ॥ २१ ॥ जयस्व गोविन्द महानुभाव
जयस्व विष्णो जय पद्मनाभ ॥ जयस्व सर्वज्ञ जयाप्रमेय जयस्व विश्वेश्वर विश्वमूर्ते ॥ २२ ॥ श्रीवराह उवाच ॥ एवं स्तुत्वा तदा राजा
निधाय स्वं कलेबरम् ॥ परमात्मनि गोविन्दे मोक्षमागाच्च शाश्वतम् ॥२३॥ इति श्रीवराहपुराणे सत्यतपउपाख्याने प्रागितिहासे षट्त्रिंशोऽ
ध्यायः ॥ ३६ ॥ अथ प्राचीनेतिहासवर्णनम् ॥ धरण्युवाच ॥ कथमाराध्यसे देव भक्तिमद्भिर्नरैर्विभो ॥ स्त्रीभिर्वा सर्वमेतन्मे शंस त्वं भूत
भावन ॥१॥ श्रीवराह उवाच ॥ भावसाध्योऽस्म्यहं देवि न वित्तैर्न जपैरहम् ॥ साध्यस्तथापि भक्तानां कायक्लेशं वदामि ते ॥ २ ॥ कर्मणा
मनसा वाचा मच्चित्तो यो नरो भवेत् ॥ तस्य व्रतानि वक्ष्येऽहं विविधानि निबोध मे ॥ ३ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं प्रकीर्त्तितम् ॥
एतानि मानसान्याहुर्व्रतानि तु धराधरे ॥ ४ ॥ एकभक्तं तथा नक्तमुपवासादिकं च यत् ॥ तत्सर्वं कायिकं पुंसां व्रतं भवति नान्यथा॥५॥
वेदस्याध्ययनं विष्णोः कीर्त्तनं सत्यभाषणम् ॥ अपैशुन्यं हितं धर्मं वाचिकं व्रतमुत्तमम् ॥ ६ ॥ अत्रापि श्रूयते चान्यद्दापिरुग्रतपाः पुरा ॥
ब्रह्मपुत्रः पुरा कल्पे आरुणिर्नाम नामतः ॥ ७ ॥ सोऽरण्यमगमत्किंचित्तपोऽर्थी द्विजसत्तमः ॥ तपस्तेपे ततस्तस्मिन्नुपवासपरायणः ॥ ८ ॥
देविकायास्तटे रम्ये सोऽवसद्ब्राह्मणः किल ॥ कदाचिदभिषेकार्थं स जगाम महानदीम् ॥ ९ ॥ तत्र स्नात्वा जपन्विप्रो ददर्शायान्तमग्रतः ॥
व्याधं महाधनुःपाणिमुग्रनेत्रं विभीषणम् ॥ १० ॥ तं द्विजं हन्तुमायातस्स वल्कलानां जिघृक्षया ॥ तं दृष्ट्वा क्षुभितो विप्रो ब्रह्मग्रस्य भय

दिति ॥ ११ ॥ ध्यायन्नारायणं देवं तस्थौ तत्रैव स द्विजः ॥ तं दृष्ट्वान्तर्गतद्वारे व्याधो भीत इवाग्रतः ॥ १२॥ विहाय सशरं चापं ततो
वचनमब्रवीत् ॥ व्याध उवाच ॥ हन्तुमिच्छन्नहं ब्रह्मन्भवन्तं प्रागिहागतः ॥ १३॥ इदानीं दर्शनात्तुभ्यं सा मतिः क्वापि मे गता ॥ ब्राह्मणानां
सहस्राणि सत्स्त्रीणामयुतानि च ॥ १४ ॥ निहतानि मया ब्रह्मन्सततं पापकारिणा ॥ कां गतिं प्रतिपत्स्यामि ब्रह्मघ्नोऽहं द्विजोत्तम ॥ १५ ॥
इदानीं तप्तुमिच्छामि तपोऽहं त्वत्समीपतः ॥ उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥ १६ ॥ एवमुक्तोऽप्यसौ विप्रो नोत्तरं प्रत्यपद्यत ॥ ब्रह्महा
पापकर्मेति मत्वा ब्राह्मणपुङ्गवः॥ १७॥अनुक्तोऽपि स धर्मेप्सुर्व्याधस्तत्रैव तस्थिवान्॥स्नात्वा नद्यां द्विजः सोऽपि वृक्षमूलमुपाश्रितः ॥१८ ॥
कस्यचित्त्वथ कालस्य तां नदीमगमत्किल ॥ व्याघ्रो बुभुक्षितः शान्तं तं विप्रं हन्तुमुद्यतः ॥ १९ ॥ अन्तर्जलगतं विप्रं यावद्व्याघ्रो जिघृ
क्षति ॥ तावद्व्याधेन व्याघ्रोऽसौ सद्यः प्राणैर्वियोजितः ॥ २० ॥ तस्माद्व्याघ्रशरीरात्तु उत्थाय पुरुषः किल ॥ विप्रश्चान्तर्जले मग्नः श्रुत्वा
तं शब्दमाकुलम् ॥ २१ ॥ नमो नारायणायेति वाक्यमेतदुवाच ह ॥ व्याघ्रेणापि श्रुतो मन्त्रः प्राणैः कण्ठस्थितैस्ततः ॥ २२ ॥ श्रुतमात्रे
जहौ प्राणान्पुरुषश्चाभवच्छुभः ॥ सोऽब्रवीद्यामि तं देशं यत्र विष्णुः सनातनः ॥ २३ ॥ त्वत्प्रसादाद्द्विजश्रेष्ठ मुक्तपाप्मा निरामयः ॥ इत्युक्तो
ब्राह्मणः प्राह कोऽसि त्वं पुरुषोत्तम ॥ २४ ॥ सोऽब्रवीत्तस्य राजेन्द्र यद्वृत्तं पूर्वजन्मनि ॥ दीर्घबाहुरिति ख्यातः सर्वधर्मविशारदः ॥ २५ ॥
अहं जानामि वेदांश्च अहं वेद्मि शुभाशुभम् ॥ ब्राह्मणैर्नैव मे कार्यं किंवस्तु ब्राह्मणा इति ॥ २६ ॥ तस्यैवंवादिनो विप्राः सर्वे क्रोधसमान्विताः
ऊचुः शापं दुराधर्षं क्रूरो व्याघ्रो भविष्यसि॥२७॥ अवमानात्तु विप्राणां नात्यर्थं स्मरणं तव॥मृत्युकाले तु संमूढ केशवेत्येव श्रोष्यसि॥२८॥
इत्युक्तोऽहं पुरा तैस्तु ब्राह्मणैर्वेदपारगैः ॥ तदेव सर्वं सम्प्राप्तो ब्रह्मशापं सुपुष्कलम् ॥ २९ ॥ ततस्ते ब्राह्मणाः सर्वे प्रणिपत्य मया
मुने ॥ उक्तानुग्रहहेतोर्वै त ऊचुर्मामिदं पुरा ॥ ३० ॥ षष्ठाह्नकालिकस्याग्रे यस्ते स्थास्यति कश्चन ॥ स भक्ष्यस्ते तु भविता कंचित्कालं नरा
धिप ॥ ३१ ॥ यदेषुघातं लब्ध्वा तु प्राणैः कण्ठगतैर्भवान् ॥ श्रोष्यति द्विजवक्त्रात्तु नमो नारायणेति च ॥ ३२ ॥ तदा स्वर्गगतिस्तुभ्यं
भविता नात्र संशयः ॥ परवक्त्रगतं चापि विष्णोर्नाम श्रुतं मया ॥ ३३ ॥ कृतद्वेषस्य विप्राणां प्रत्यक्षोऽभवदच्युतः ॥ यः पुनर्ब्राह्मणान्पूज्य

स्ववक्रेण नमो हरिम् ॥ ३४ ॥ वदन्प्राणैर्वियुज्येत मुक्तोऽसौ वीतकिल्बिषः ॥ सत्यं सत्य पुनः सत्यमुत्क्षिप्य भुजमुच्यते ॥ ३५ ॥ जङ्गमा
ब्राह्मणा देवाः कूटस्थः पुरुषोत्तमः ॥ एवमुक्त्वा गतः स्वर्गं स राजा वीतकल्मषः ॥ ३६ ॥ ब्राह्मणोऽपि तदा मुक्तस्तं व्याधं प्रत्यभाषत ॥
ऋषिरुवाच ॥ जिघृक्षोर्मृगराजस्य यत्त्वया रक्षितो ह्यहम् ॥ ३७ ॥ तत्पुत्र तुष्टस्ते दाह्मि वरं वरय सुव्रत ॥ व्याध उवाच ॥ एष एव वरो मह्यं
यत्त्वं मां भाषसे द्विज ॥ ३८ ॥ अतः परं वरेणाहं किं करोमि प्रशाधि माम् ॥ ऋषिरुवाच ॥ अहं त्वया पुरा व्याध प्रार्थितोऽस्मि तपोऽ
र्थिना ॥ ३९ ॥ बहुपातकयुक्तेन घोररूपेण चानघ ॥ इदानीं तव पापानि देविकाभिषवेण च ॥ ४० ॥ मद्दर्शनेन च चिरं विष्णुनामश्रुतेन
च ॥ नष्टानि शुद्धदेहोऽसि साम्प्रतं नात्र संशयः ॥ ४१ ॥ इदानीं वरमक त्वं गृहाण मम सन्निधौ ॥ तपः कुरुष्व साधो त्वं चिरकालं यदी
च्छसि ॥ ४२ ॥ व्याध उवाच ॥ य एष भवता प्रोक्तो विष्णुर्नारायणः प्रभुः ॥ स कथं प्राप्यते मर्त्यैरेष एव वरो मम ॥४३॥ ऋषिरुवाच॥
तमुद्दिश्य व्रतं कुर्याद्यत्किंचित्पुरुषोऽच्युतम् ॥ स परं तमवाप्नोति भक्त्या युक्तः पुमानिति॥ ४४ ॥ एवं ज्ञात्वा भवान्पुत्र व्रतमेतत्समाचार ॥
न भक्षयेद्गृणान्नं तु न वदेदनृतं क्वचित् ॥ ४५ ॥ एतत्ते व्रतमादिष्टं मया व्याधवरं ध्रुवम् ॥ अत्रैव तपसा युक्तस्तिष्ठ त्वं यावदिच्छसि ॥४६॥
श्रीवराह उवाच ॥ एवं चिन्तान्वितं मत्वा वरदो ब्राह्मणोऽभवत् ॥ मोक्षार्थिनमथो बुध्वा वंचयित्वा गतो मुनिः ॥४७॥ इति श्रीवराहपुराणे सत्य
तपउपाख्याने प्रागितिहासे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ वराह उवाच ॥ स शुभं शोभनं मार्गमास्थाय व्याधसत्तमः ॥ तपस्तेपे निराहारस्तं
गुरुं मनसा स्मरन् ॥ १ ॥ भिक्षाकाले तु सम्प्राप्ते शीर्णपर्णान्यभक्षयत् ॥ स कदाचित् क्षुधाविष्टो वृक्षमूलं समाश्रितः ॥ २ ॥ बभुक्षित
स्तरोः पर्णान्यैच्छद्भक्षितुमन्तिकात् ॥ इत्येवं कुर्वतो व्योम्नि वागुवाचाशरीरिणी ॥ ३ ॥ मा भक्षयस्व सकठमुच्चैरेवं प्रभाषिते ॥ ततोऽसौ तद्वि
हायान्यद्दार्क्षं पतितमग्रहीत् ॥ ४ ॥ तदप्येवं निषिद्धं स्यादन्यदेव तथैव च ॥ एवं स सकठं मत्वा व्याधः किञ्चिन्न भक्षयत् ॥ ५ ॥ निराहार
स्तपस्तेपे स्मरन् गुरुमतान्द्रितः ॥ एवं तपस्यतस्तस्य काले ऋषिवरोऽभ्ययात् ॥ ६ ॥ दुर्वासाः शंसितात्मा वै प्राणयुक्तमपश्यत ॥ व्याधं
तपोरथतेजोभिर्ज्वलमानं हविर्यथा ॥ ७ ॥ सोऽपि व्याधस्तु तं नत्वा शिरसाऽथ महामुनिम् ॥ उवाच तं कृतार्थोऽस्मि भगवन्दर्शनात्तव ॥८॥

इदानीं श्राद्धकाले त्वं प्राप्तोऽसि मम देवतम् ॥ शीर्णपर्णादिभिः कृत्वा प्रीणयामि द्विजोत्तमम् ॥९॥ दुर्वासा अपि तं शुद्धभावपूतं जितेन्द्रियम् ॥
जिज्ञासुस्तत्तपो वाक्यमिदमुच्चैरुवाच ह ॥ १० ॥ यवगोधूमशालीनामन्नं चैव सुसंस्कृतम् ॥ दीयतां मे क्षुधार्त्ताय त्वामुद्दिश्यागताय
च ॥ ११ ॥ इत्युक्ते न्वसौ व्याधश्चिन्तां परमिकां गतः ॥ क्व संभविष्यते मह्यमिति चिन्तापरोऽभवत् ॥ १२ ॥ तस्य चिन्तयतः पात्र
माकाशात्पतितं शुभम् ॥ सौवर्णं सिद्धिसंयुक्तं तज्जग्राह करेण सः ॥ १३ ॥ तद्गृहीत्वा मुनिं प्राह दुर्वासाख्यं ससाध्वसः ॥ अत्रैव स्थीयतां
ब्रह्मन्यावद्भिक्षाटनं त्वहम् ॥ १४ ॥ करोमि मत्प्रसादोऽयं क्रियतां ब्रह्मवित्तम ॥ एवमुक्त्वा ततो भिक्षां याचितुं व्याधसत्तमः ॥ १५ ॥ नाति
दूरेण नगरं वनघोषसमान्वितम् ॥ तस्य तत्र प्रयातस्य अग्रतः सर्वशोभनाः ॥ १६ ॥ वृक्षेभ्यो निर्ययुश्चान्या हेमपात्राग्रपाणयः ॥ विविधा
न्नानि तस्याशु दत्त्वा पात्रं प्रपूरितम् ॥१७॥ स च भूतार्थमात्मानं मत्वा पुनरथाश्रमम् ॥ आजगाम ततोऽपश्यत्तमृषिं जपतां वरम् ॥१८॥
तं दृष्ट्वा स्थाप्य तां भिक्षां शुचौ देशे प्रसन्नधीः ॥ प्रणम्य तमृषिं वाक्यमुवाच व्याधसत्तमः ॥ १९ ॥ ब्रह्मन् क्षालय पादौ त्वमुपविश्यासने
शुभे ॥ यदि मेऽनुग्रहो देव तदेवं कर्त्तुमर्हसि ॥ २० ॥ एवमुक्तः स जिज्ञासुस्तपोवीर्यं शुभं मुनिः ॥ नदीं गन्तुं न शक्नोमि जलपात्रं न
चास्ति मे ॥ २१ ॥ कथं प्रक्षालनं व्याध पादयोर्मे भविष्यति ॥ इत्येवं मुनिना प्रोक्तो व्याधश्चिन्तापरोऽभवत् ॥ २२ ॥ किं करोमि
कथं चास्य भोजनं वै भविष्यति ॥ एवं संचिन्त्य मनसा गुरुं स्मृत्वा विचक्षणः ॥ २३ ॥ जगाम शरणं तां तु सरितं देविकां सुधीः ॥
व्याध उवाच ॥ व्याधोऽस्मि पापकर्म्मास्मि ब्रह्महास्मि सरिद्वरे ॥ २४ ॥ तथापि संस्मृता देवि पाहि मां . शरणागतम् ॥
देवतां नैव जानामि न मन्त्रं न तथार्चनम् ॥ २५ ॥ गुरुपादौ परं ध्यात्वा पश्यामि सततं शुभम् ॥ एवंविधस्य मे देवि
दयां कुरु सरिद्वरे ॥ २६ ॥ ऋषेरासन्नतां याहि पादशौचार्थमापगे ॥ एवमुक्ता तु व्याधेन देविका पापनाशिनी ॥ २७ ॥
आजगाम यतस्तस्थौ दुर्वासा शंसितव्रतः ॥ तद्दृष्ट्वा महदाश्चर्यं दुर्वासा विस्मयं ययौ ॥ २८ ॥ प्रक्षाल्य हस्तपादौ च तदन्नं श्रद्धयान्वितम् ॥
बुभुजे परमप्रीतस्तथाचम्य विचक्षणः ॥२९॥ तमस्थिशेषं व्याधं तु क्षुधा दुर्बलताङ्गतम् ॥ उवाच वेदाः साङ्गास्ते सरहस्यपदक्रमाः ॥३०॥

ब्रह्मविद्या पुराणानि प्रत्यक्षाणि भवन्तु ते ॥ एवं प्रादाद्वरं तस्य दुर्वासा नाम चाकरोत् ॥ ३१ ॥ भवान्सत्यतपा नाम ऋषिराद्यो भवि
ष्यति ॥ एवं दत्तवरो व्याधस्तमाह मुनिसत्तमम् ॥ ३२ ॥ व्याधो भूत्वा कथं ब्रह्मन्वेदानध्यापयाम्यहम् ॥ ऋषिरुवाच ॥ प्राक्शरीरं गतं
तेऽद्य निराहारस्य सत्तम ॥ ३३ ॥ तपोमयं शरीरं ते पृथग्भूतं न संशयः ॥ प्राग्विज्ञानं गतं नाशमिदानीं शुद्धमक्षरम् ॥ ३४ ॥ उत्पन्नं
शुद्धकायोऽसि सत्यमेतद्ब्रवीमि ते ॥ तेन वेदाश्च शास्त्राणि प्रतिभास्यन्ति वै मुने ॥३५॥ इति श्रीवराहपुराणे सत्यतपउपाख्याने प्रागितिहासे
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ अथ मत्स्यद्वादशीव्रतम् ॥ सत्यतपा उवाच ॥ भगवन्द्वे शरीरे तु इति यत्परिकीर्त्तितम् ॥ तन्मे कथय भेदं वै
केन ब्रह्मविदां वर ॥ १ ॥ दुर्वासा उवाच ॥ न द्वे त्रीणि शरीराणि वाच्यं तद्विपरीतकम् ॥ विभोगायतनं चैव शरीराणीति देहिनाम् ॥ २ ॥
प्रागवस्थमधर्माख्यं परिज्ञानविवर्जितम् ॥ अपरं सव्रतं तद्धि ज्ञेयमत्यन्तधार्म्मिकम् ॥ ३ ॥ धर्म्माधर्म्मोपभोगाय यत्तृतीयमतीन्द्रियम् ॥
तत्त्रिभेदं विनिर्दिष्टं ब्रह्मविद्भिर्विचक्षणैः ॥ ४ ॥ यावता धर्म्मभोगश्च भुक्तिश्चेति त्रिभेदकम् ॥ यस्तु भावः पुरा ह्यासीत्प्राणिनो निघ्नत
स्तव ॥ ५ ॥ तत्पापाख्यं शरीरं ते पापसंज्ञमतोऽभवत् ॥ इदानीं शुभवृत्तिं तु कुर्वतस्तप आर्जवम् ॥ ६ ॥ अपरं धर्मरूपं तु शरीरं ते व्यव
स्थितम् ॥ तेन वेदपुराणानि ज्ञातुमर्हस्यसंशयम् ॥ ७ ॥ यदाष्टके सम्परिवर्तिते पुमांस्तदान्यवृत्तो भवतीह निश्चितम् ॥ गताष्टवर्षस्तु पुमान्
यदा भवेत्तदान्यचेष्टो भवतीह मानवः ॥ ८ ॥ एकं शरीरं हि पृथक् निर्दिष्टं ब्रह्मवादिभिः ॥ अवस्थाभेदतश्चैवं तदेतत्कथितं त्रिधा ॥ ९ ॥
अन्तरं नास्ति चैतस्य यथा मृद्घटयोरिव ॥ कर्म्मकाण्डं चतुर्भेदं ब्राह्मणादिषु कीर्त्तितम् ॥ १० ॥ तत्र वेदोक्तकर्म्माणि त्रयः कुर्वन्ति नित्यशः ॥
त्रिशुश्रूषामथैकस्तु एता वेदोदिताः क्रियाः ॥ ११ ॥ एतान्धर्म्मांस्तु विज्ञाय ब्राह्मणो यस्तपस्यति ॥ तस्य मुक्तिर्भवेन्नूनं वेदवादरतस्य
च ॥ १२ ॥ सत्यतपा उवाच ॥ यत्तदेतत्परं ब्रह्म त्वया प्रोक्तं महामुने ॥ तस्य रूपं न जानन्ति योगिनोऽपि महात्मनः ॥ अनाम गोत्र
रहितममूर्त्तं मूर्त्तिवर्ज्जितम् ॥ १३ ॥ कथं तज्ज्ञायते ब्रह्म संज्ञानामविवर्ज्जितम् ॥ तत्तस्य संज्ञां कथय येन जानाम्यहं गुरो ॥ १४ ॥
यदेतत्परमं ब्रह्म वेदे शास्त्रेषु पठ्यते ॥ स वेदः पुण्डरीकाक्षः स्वयं नारायणो हरिः ॥ स यज्ञैर्विविधैरिष्टैर्दानैर्दत्तैश्च सत्तम ॥ १५ ॥

प्राप्यते परमो देवः स्वयं नारायणो हरिः ॥ भगवन् बहुवित्तेन ऋत्विग्भिर्वेदपारगैः ॥ १६ ॥ प्राप्यते पुण्यकृद्भिर्हि देवो नारायणो भृशम् ॥ अधनेन कथं देवः प्राप्यते तद्वदस्व मे ॥ १७ ॥ वित्तेन च विना दानं दातुं विप्र न शक्यते ॥ विद्यमानेऽपि न मतिः कुटुम्बासक्तचेतसः ॥ १८ ॥ तस्य नारायणो दूरे सर्वथा प्रतिभाति मे ॥ अत्यायासेन लभ्येत येन देवः सनातनः ॥ १९ ॥ तन्मे विशेषतो ब्रूहि सर्ववर्णैः कृतं भवेत् ॥ दुर्वासा उवाच ॥ कथयामि परं गुह्यं रहस्यं देवनिर्मितम् ॥ २० ॥ धरण्या यत्कृतं पूर्वं मज्जन्त्या तु रसातले ॥ पृथिव्याः पार्थिवो भावः सलिलेनातिरेचितः ॥ २१ ॥ तस्यां सलिलमग्नायां पृथ्वी प्रायाद्रसातलम् ॥ सा भूतधारिणी देवी रसातलगता शुभा ॥ २२ ॥ आराधयामास विभुं देवं,नारायणं प्रभुम् ॥ उपवासव्रतैर्देवि नियमैश्च पृथग्विधैः ॥ २३ ॥ कालेन महता तस्याः प्रसन्नो गरुडध्वजः ॥ उज्जहार क्षितिं स्थित्यां स्थापयामास सोऽव्ययः ॥ २४ ॥ सत्यतपा उवाच ॥ कोऽसौ धरण्या सञ्चीर्ण उपवासो महामुने ॥ कानि व्रतानि च तथा एतन्मे वक्तुमर्हसि ॥ २५ ॥ दुर्वासा उवाच ॥ यदा मार्गशिरे मासि दशम्यां नियतात्मवान् ॥ कृत्वा देवार्चनं धीमानग्निकार्यं यथाविधि ॥ २६ ॥ शुचिवासाः प्रसन्नात्मा हव्यमन्नं सुसंस्कृतम् ॥ भुक्त्वा पञ्चपदं गत्वा पुनः शौचं तु पादयोः ॥ २७ ॥ कृत्वाष्टाङ्गुलमात्रं तु क्षीरवृक्षसमुद्भवम् ॥ भक्षयेद्दन्तकाष्ठं तु तत आचम्य यत्नतः ॥ २८ ॥ स्पृष्ट्वा द्वाराणि सर्वाणि चिरं ध्यात्वा जनार्दनम् ॥ शङ्खचक्रगदापाणिं पीताम्बरधरं विभुम् ॥ २९ ॥ प्रसन्नवदनं देवं सर्वलक्षणपूजितम् ॥ ध्यात्वा पुनर्जलं हस्ते गृह्य भावैर्जनार्दनम् ॥ ३० ॥ दद्यादर्घ्यं च देवाय करतोयेन मानवः ॥ एवमुच्चारयन्वाचं तस्मिन्काले महामुने ॥ ३१ ॥ एकादश्यां निराहारः स्थित्वा चैवापरेऽहनि ॥ भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ ३२ ॥ एवमुक्त्वा ततो रात्रौ देवदेवस्य सन्निधौ ॥ जपन्नारायणायेति स्वपेत्तत्र विधानतः ॥ ३३ ॥ ततः प्रभाते विमले नदीं गत्वा समुद्रगाम् ॥ इतरां वा तडागं वा गृहे वा नियतात्मवान् ॥ ३४ ॥ आनीय मृत्तिकां शुद्धां मन्त्रेणानेन मानवः ॥ धारणं पोषणं त्वत्तो भूतानां देवि सर्वदा ॥ ३५ ॥ तेन सत्येन मे पापं यावन्मोचय सुव्रते ॥ ब्रह्माण्डोदरतीर्थानि त्वया पृष्टानि काश्यपि ॥ ३६ ॥ तेनेमां मृत्तिकां त्वत्तो गृह्य स्थास्येऽद्य मेदिनि ॥ त्वयि सर्वे रसा नित्याः स्थिता वरुण सर्वदा ॥ ३७ ॥ तैरिमां मृत्तिकां प्लाव्य पूतां कुरु च मा चिरम् ॥ एवं मृदं तथा तोयं प्रगृह्यात्मानमालभेत् ॥ ३८ ॥

॥३९॥

त्रिः कृत्वा शेषमृत्स्नाभिः सर्वाङ्गं लेपयेद्बुधः ॥ वारुणैरेव मन्त्रैस्तु स्नानं कुर्याद्यथाविधि ॥३९॥ स्नात्वा चावश्यकं कृत्वा पुनर्देवगृहं व्रजेत् ॥
तत्राराध्य मया युक्तं देवं नारायणं प्रभुम् ॥४०॥ केशवाय नमः पादौ कटिं दामोदराय च ॥ ऊरुयुग्मं नृसिंहाय उरः श्रीवत्सधारिणे ॥४१॥
कण्ठं कौस्तुभनाथाय वक्षः श्रीपतये तथा॥त्रैलोक्यविजयायेति बाहू सर्वात्मने शिरः॥४२॥ रथाङ्गधारिणे चक्रं शंकरायेति वारिजम् ॥गम्भी
रायेति च गदामम्भोजं शान्तिमूर्तये ॥४३॥ एवमभ्यर्च्य देवेशं देवं नारायणं प्रभुम् ॥ पुनस्तस्याग्रतः कुम्भांश्चतुरः स्थापयेद्बुधः ॥ ४४ ॥
जलपूर्णान्समाल्यांश्च तिलपूर्णैः सकाञ्चनैः॥चत्वारस्ते समुद्रास्तु कलशाः परिकीर्त्तिताः॥४५॥तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रगर्भितम् ॥
सौवर्णं राजतं पात्रं ताम्रं वा दारवं तथा ॥ ४६ ॥ अलाभे सर्वपात्राणां पालाशं पत्रमिष्यते ॥ तोयपूर्णं तु तत्कृत्वा तस्मिन्पात्रे ततो
न्यसेत् ॥ ४७॥ सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्दनम् ॥ वारिरसंयुक्तं सर्वाभरणभूषितम् ॥ ४८ ॥ तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च
शोभितम् ॥ गन्धधूपैश्च वस्त्रैश्च ह्यर्चयित्वा यथाविधि ॥ ४९ ॥ रसातलगता वेदा यथा देव त्वया हृताः॥ मत्स्यरूपेण तद्वन्मां भवानुद्धर
केशव ॥ ५० ॥ एवमुच्चार्य तस्याग्रे जागरं तत्र कारयेत् ॥ यथाविभवसारेण प्रभाते विमले तथा॥५१॥ चतुर्णां ब्राह्मणानां च चतुरो दापये
द्घटान् ॥ पूर्वं तु बह्वृचे दद्याच्छन्दोगे दक्षिणं तथा ॥ ५२ ॥ यजुःशाखान्विते दद्यात्पश्चिमं घटमुत्तमम् ॥ उत्तरं कामतो दद्यादेष एव विधिः
स्मृतः ॥५३॥ ऋग्वेदः प्रीयतां पूर्वं सामवेदस्तु दक्षिणे ॥ यजुर्वेदः पश्चिमतो ह्यथर्वश्चोत्तरेण तु ॥५४॥ अनेन क्रमयोगेण प्रीयतामिति वाच
येत् ॥ सौवर्णं मत्स्यरूपं तु आचार्याय निवेदयेत्॥५५॥ गन्धधूपादिवस्त्रैश्च संपूज्य विविधक्रमात् ॥ यस्त्विमं सरहस्यं च मन्त्रं चैवोपपाद
येत् ॥५६॥ विधानं तस्य वै दत्त्वा फलं कोटिगुणोत्तरम् ॥ प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते ॥५७॥स कोटिजन्म नरके पच्यते पुरुषा
धमः ॥ विधानस्य प्रदाता यो गुरुरित्युच्यते बुधैः ॥५८॥ एवं दत्त्वा विधानेन द्वादश्यां विष्णुमर्च्य च॥विप्राणां भोजनं दद्याद्यथाशक्त्या सद
क्षिणम् ॥५९॥ सतिलं ताम्रपात्रं च स्थापितं कलशोपरि ॥ तत्सर्वं जलपात्रस्थं ब्राह्मणाय कुटुम्बिने ॥६०॥ देवं दद्यान्महाभागस्ततो विप्रांश्च
भोजयेत्॥भूरिणा परमान्नेन ततः पश्चात्स्वयं नरः॥६१॥भुञ्जीत सहितो बालैर्वाग्यतः संयतेन्द्रियः॥अनेन विधिना यस्तु धरणीव्रतकृन्नरः॥६२

तस्य पुण्यफलं चाग्र्यं शृणु बुद्धिमतां वर ॥ यदि वक्त्रसहस्राणि भवन्ति मम सुव्रत॥६३॥आयुश्च ब्रह्मणस्तुल्यं भवेद्यदि महाव्रत ॥ तदानी
मस्य धर्मस्य फलं कथयितुं भवेत् ॥ ६४ ॥ तथाप्युद्देशतो ब्रह्मन्कथयिष्यामि तच्छृणु ॥ दशसप्तदशाब्दे च अष्टौ चत्वार एव च ॥६५॥
लक्षायुतानि चत्वारि एकस्यास्य चतुर्युगम्॥ तैरेकसप्ततियुगं भवेन्मन्वन्तरं मुने ॥६६॥चतुर्दशाहोरात्रस्तु तावती रात्रिरिष्यते॥एवं त्रिंशद्दिनो
मासस्ते द्वादश समाः स्मृताः ॥ ६७ ॥ तेषां शतं ब्रह्मणस्तु आयुर्नास्त्यत्र संशयः ॥ यः सकृद्द्वादशीमेतामनेन विधिना क्षिपेत् ॥ ६८ ॥
स ब्रह्मलोकमाप्नोति तावत्कालं च तिष्ठति ॥ ततो ब्रह्मोपसंहारः संहारे तल्लयोऽचिरम् ॥ ६९ ॥ पुनः सृष्टो भवेद्देवो राजा नाम महातपाः ॥
ब्रह्महत्यादिपापानि इहलोककृतान्यपि ॥ ७० ॥ अकामः कामतो वापि तानि नश्यन्ति तत्क्षणात् ॥ इह लोके दरिद्रो यो भ्रष्टराज्योऽथवा
नृपः ॥ ७१ ॥ उपोष्य तां विधानेन स राजा जायते ध्रुवम् ॥ वन्ध्या नारी भवेद्या तु अनेन विधिना शुभा ॥ ७२ ॥ उपोष्यति भवेत्तस्याः
पुत्रः परमधार्मिकः ॥ अगम्यागमनं येन कृतं जानाति मानदः ॥ ७३ ॥ स इमं विधिमासाद्य तस्मात्पापाद्विमुच्यते ॥ ब्रह्मक्रियाया लोपेन
बहुवर्षैकृतेन च ॥ ७४ ॥ उपोष्येमां सकृद्भक्त्या वेदसंस्कारमाप्नुयात् ॥ किमत्र बहुनोक्तेन न तदस्ति महामुने ॥ ७५ ॥ अप्राप्यं
प्रापयति या अतः कार्या सदा नरैः ॥ अनेन विधिना ब्रह्मन्स्वयमेवाप्युपोषिता ॥ ७६ ॥ धरण्या मग्नया तात नात्र कार्या विचारणा ॥ अदी
क्षिताय नो देयं विधानं नास्तिकाय च ॥ ७७ ॥ देवब्रह्मद्विषे वापि न श्राव्यं तु कदाचन ॥ गुरुभक्ताय दातव्यं सद्यः पापप्रणाशनम्॥७८॥
इह जन्मनि सौभाग्यं धनं धान्यं वराः स्त्रियः ॥ भवन्ति विविधास्तस्य य उपोष्याति मानवः ॥ ७९ ॥ य इमं श्रावयेद्भक्त्या द्वादशीकल्प
मुत्तमम् ॥ शृणोति वा स पापैस्तु सर्वैरेव प्रमुच्यते ॥ ८० ॥ इति श्रीवराहपुराणे धरणीव्रते मत्स्यद्वादशीव्रतं नाम ऊनचत्वारिंशोऽ
ध्यायः ॥ ३९ ॥ अथ कूर्मद्वादशीव्रतम् ॥ दुर्वासा उवाच ॥ तथैव पौषमासे तु अमृतं मथितं सुरैः ॥ तत्र कूर्मो भवेद्देवः स्वयमेव जना
र्दनः ॥१॥ तस्येयं तिथिरुद्दिष्टा महती कूर्मरूपिणः ॥ पौषमासस्य या शुक्ला दशमीति निगद्यते ॥ २ ॥ तस्यां प्रागेव संकल्प्य प्राग्वत्स्नाना
दिकाः क्रियाः ॥ निर्वर्त्याराधयेद्भक्त्या एकादश्यां जनार्दनम् ॥ पृथङ्मन्त्रैर्मुनिश्रेष्ठ देवदेवं जनार्दनम् ॥ ३ ॥ कूर्माय पादौ प्रथमं प्रपूज्य

नारायणायेति हरेः कटिं च ॥ सङ्कर्षणायेत्युदरं विशोकेत्युरोभवायेति तथैव कण्ठम् ॥ ४ ॥ सुबाहवे चैव भुजौ शिरश्च नमो विशालाय
नमोऽस्तु देवः ॥ स्वनाममन्त्रेण सुगन्धपुष्पैर्धूपादिनैवेद्यफलैर्विचित्रैः ॥ ५ ॥ अभ्यर्च्य देवं कलशं तदग्रे संस्थाप्य माल्यासितवस्त्रयुक्तम् ॥
तं रत्नगर्भं तु पुरेव कृत्वा स्वशक्तितो हेममयं च देवम् ॥ ६ ॥ समन्दरं कूर्मरूपेण कृत्वा संस्थाप्य ताम्रे घृतपूर्णपात्रे ॥ पूर्णे घटस्योपरि
सन्निवेश्य तद्ब्राह्मणं पूज्य तथैव दद्यात् ॥ ७ ॥ इत्थो ब्राह्मणान्पूज्याद् दक्षिणादिभिर्यथाशक्त्या प्रीणये देवदेवम् ॥ नारायणं कूर्मरूपेण युक्तं
पश्चात्तु भुञ्जीत सभृत्यवर्गः ॥ ८ ॥ एवं कृते विप्र समस्तपापं विनश्यते नात्र कुर्याद्विचारः ॥ संसारचक्रं स विहाय शुद्धं प्राप्नोति लोकं च हरेः
पुराणम् ॥ ९ ॥ प्रयांति पापानि विनाशमाशु श्रीमांस्तथा जायते सत्यधर्मः ॥ अनेकजन्मान्तरसञ्चितानि नश्यन्ति पापानि नरस्य भक्त्या ॥ १० ॥
प्रागुक्तरूपं तु फलं लभेत नारायणस्तुष्टिमायाति सद्यः ॥ ११ ॥ इति श्रीवराहपुराणे धरणीव्रते कूर्मद्वादशीव्रतं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥
अथ वराहद्वादशीव्रतम् ॥ दुर्वासा उवाच ॥ एवं माघे सिते पक्षे द्वादशी धरणीभृतः ॥ वराहस्य शृणुष्वाद्यां मुने परमधार्मिक ॥ १ ॥ प्रागुक्तेन
विधानेन सङ्कल्पस्थानमेव च ॥ कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः ॥ २ ॥ धूपनैवेद्यगन्धैश्च अर्चयित्वाच्युतं नरः ॥ पश्चात्तस्याग्रतः कुम्भं
जलपूर्णं तु विन्यसेत् ॥ ३ ॥ वराहायेति पादौ तु माधवायेति वै कटिम् ॥ क्षेत्रज्ञायेति जठरं विश्वरूपायेत्युरो हरेः ॥ ४ ॥ सर्वज्ञायेति कण्ठं तु
प्रजानां पतये शिरः ॥ प्रद्युम्नायेति च भुजौ दिव्यास्त्राय सुदर्शनम् ॥ ५ ॥ अमृतोद्भवाय शंखं तु एष देवार्चने विधिः ॥ एवमभ्यर्च्य मेधावी तस्मिन्
कुंभे तु विन्यसेत् ॥ ६ ॥ सौवर्णं रौप्यताम्रं वा पात्रं विभवशक्तितः ॥ सर्वबीजैस्तु सम्पूर्णं स्थापयित्वा विचक्षणः ॥ ७ ॥ तत्र शक्त्या तु सौवर्णं
वराहं कारयेद्बुधः ॥ दंष्ट्राग्रेणोद्धृतां भूमिं सपर्वतवनद्रुमाम् ॥ ८ ॥ माधवं मधुहन्तारं वाराहं रूपमास्थितम् ॥ सर्वबीजभृतं पात्रं रत्नगर्भं घटोपरि ॥ ९ ॥
स्थापयेत्परमं देवं जातरूपमयं हरिम् ॥ सितवस्त्रयुगाच्छन्नं ताम्रपात्रे तु वै मुने ॥ १० ॥ स्थाप्यार्चयेद्गन्धपुष्पैर्नैवेद्यैर्विविधैः शुभैः ॥ पुष्पमण्ड
लिकां कृत्वा जागरं तत्र कारयेत् ॥ ११ ॥ प्रादुर्भावान्हरेस्तत्र वाचयेद्वाचयेद्बुधः ॥ एवं पूजां विधायाथ प्रभाते उदिते रवौ ॥ १२ ॥ शुचिः स्नात्वा
हरिं पूज्य ब्राह्मणाय निवेदयेत् ॥ वेदवेदाङ्गविदुषे साधुवृत्ताय धीमते ॥ १३ ॥ विष्णुभक्ताय शान्ताय श्रोत्रियाय कुटुम्बिने ॥ एवं सकुम्भं तं दत्त्वा

हरिं वाराहरूपिणम् ॥ १४ ॥ दत्त्वा चाथ लभेद्यत्तु फलं तन्मे निशामय ॥ इह जन्मनि सौभाग्यं श्रीः कान्तिस्तुष्टिरेव च ॥ १५ ॥ दरिद्रो वित्तवान्सद्य
अपुत्रो लभते सुतम् ॥ अलक्ष्मीर्नश्यते सद्यो लक्ष्मीः संविशते बलात् ॥ १६ ॥ इह जन्मनि सौभाग्यं परलोके निशामय ॥ अस्मिन्नर्थे पुरा
वृत्तमितिहासं पुरातनम् ॥ १७ ॥ प्रतिष्ठानेऽभवद्राजा वीरधन्वेति विश्रुतः ॥ स कदाचिद्वनं प्रायान्मृगहेतोः परन्तपः ॥ १८ ॥ व्यापादयन्मृग
गणान्तत्रर्षिर्वनमध्यगः ॥ जघान मृगरूपान्सोऽज्ञानतो ब्राह्मणान्नृपः ॥ १९ ॥ भ्रातरस्तत्र पञ्चाशन्मृगरूपेण संस्थिताः ॥ संवर्तस्य सुता ब्रह्मन्
वेदाध्ययनतत्पराः ॥ २० ॥ सत्यतपा उवाच ॥ कारणं किं समाश्रित्य ते चक्रुर्मृगरूपताम् ॥ एतन्मे कौतुकं ब्रह्मन्प्रणतस्य प्रसीद मे ॥ २१ ॥
दुर्वासा उवाच ॥ ते कदाचिद्वनं याता दृष्ट्वा हरिणपोतकान् ॥ जातमात्रान्स्वमात्रा तु विहीनान्नृपसत्तम ॥ २२ ॥ एकैकं जगृहुस्ते हि ते मृताः
कन्दरास्थिताः ॥ ततस्ते दुःखिताः सर्वे ययुः पितरमन्तिकम् ॥ २३ ॥ ऊचुश्च वचनं चेदं मृगहिंसामृते मुने ॥ ऋषिपुत्रा ऊचुः ॥ जातमात्रा
मृगाः पञ्च अस्माभिर्निहता मुने ॥ २४ ॥ अकामतस्ततोऽस्माकं प्रायश्चित्तं विधीयताम् ॥ संवर्त उवाच ॥ मत्पिता हिंसकश्चासीदहं
तस्माद्विशेषतः ॥ २५ ॥ भवन्तः पापकर्माणः सञ्जाता मम पुत्रकाः ॥ इदानीं मृगचर्माणि परिधाय यतव्रताः ॥ २६ ॥ चरध्वं पञ्च वर्षाणि ततः
शुद्धा भविष्यथ ॥ एवमुक्तास्तु ते पुत्रा मृगचर्मोपवीतिनः ॥ २७ ॥ वनं विविशुरव्यग्रा जपन्तो ब्रह्म शाश्वतम् ॥ तथा वर्षे व्यतिक्रान्ते
वीरधन्वा महीपतिः ॥ २८ ॥ तत्राजगाम यस्मिंस्ते चरन्ति मृगरूपिणः ॥ ते चाप्येकतरोर्मूले मृगचर्मोपवीतिनः ॥ २९ ॥ जपन्तः संस्थिता
स्ते हि राज्ञा दृष्टा मृगा इति ॥ मत्वा विद्धास्तु युगपन्मृतास्ते ब्रह्मवादिनः ॥ ३० ॥ तान्दृष्ट्वा तु मृतान् राजा ब्राह्मणान्संशितव्रतान् ॥
भयेन वेपमानस्तु देवराताश्रमं ययौ ॥ ३१ ॥ तत्रापृच्छद्ब्रह्महत्या मम जाता महामुने ॥ आमूलात्तद्यथं वृत्तं कथयित्वा नराधिपः ॥ ३२ ॥
भृशं शोकपरीतात्मा रुरोदातीव दुःखितः ॥ स ऋषिर्देवरातस्तु रुदन्तं नृपसत्तमम् ॥ ३३ ॥ उवाच मा भैर्नृपते अपनेष्यामि पातकम् ॥ पाताले
सुतलाख्ये च यथा धात्री निमज्जती ॥ ३४ ॥ उद्धृता देवदेवेन विष्णुना क्रोडमूर्त्तिना ॥ तस्मादवन्तं राजेन्द्र ब्रह्मवध्यापरिप्लुतम् ॥ ३५ ॥
उद्धरिष्यति देवोऽसौ स्वयमेव जनार्दनः ॥ एवमुक्तस्ततो राजा हर्षितो वाक्यमब्रवीत् ॥ ३६ ॥ कतरेण प्रकारेण स मे देवः प्रसीदति ॥ प्रसन्ने

चाशुभं सर्वं येन नश्यति सत्तम ॥३७॥ दुर्वासा उवाच ॥ एवमुक्तो मुनिस्तेन देवरात इदं व्रतम् ॥ आचचक्षो सोऽपि तत्कृत्वा भुक्त्वा भोगान्
सुपुष्कलान् ॥३८॥ मृत्युकाले मुनिश्रेष्ठ सौवर्णेन विराजता ॥ विमानेनागमत्स्वर्गमिन्द्रलोकं स पार्थिवः ॥ ३९॥ तस्येन्द्रस्त्वर्घमादाय प्रत्यु
त्थानेन निर्ययौ ॥ आयान्तमिन्द्रं दृष्ट्वा तु तमूचुर्विष्णुकिंकराः ॥ ४० ॥ न द्रष्टव्यो देवराजस्त्वं हीनस्तपसा इति ॥ एवं सर्वे लोकपाला
निर्ययुस्तस्य तेजसा ॥४१॥ प्रत्याख्याताश्च तैर्विष्णुकिंकरैर्हीनकर्मणः ॥ एवं स सत्यलोकान्तं गतो राजा महामुने ॥४२॥ अपुनर्मारके
लोके दाहप्रलयवर्जिते ॥ अद्यापि तिष्ठते देवैः स्तूयमानो महानृपः ॥ ४३ ॥ प्रसन्ने यज्ञपुरुषे किं चित्रं येन तद्भवेत् ॥ इह जन्मनि सौभाग्य
मायुरारोग्यसम्पदः ॥४४॥ एकैका विधिनोपास्ता ददात्यमृतमुत्तमम् ॥ किं पुनः सर्वसंपूर्णः स ददाति स्वकं पदम् ॥४५॥ नारायणश्चतुर्मूर्त्तिः
परार्द्धेयश्च न संशयः ॥ यथैवोद्धृतवान्वेदान्मत्स्यरूपेण केशवः ॥४६॥ क्षीराम्बुधौ मथ्यमाने मन्दरं धृतवान् प्रभुः ॥ तद्वच्च कूर्मरूपी स्याद्द्वि
तीयां पश्य वैष्णवीम् ॥४७॥ यथा रसातलात्क्ष्मां च धृतवान्पुरुषोत्तमः ॥ वराहरूपी तद्वच्च तृतीयां पश्य वैष्णवीम् ॥ ४८ ॥ इति श्रीवराह
पुराणे धरणीव्रते वराहद्वादशीव्रतं नाम एकचत्वारिंशोऽध्यायः ॥४१॥ अथ नरसिंहद्वादशीव्रतम् ॥ दुर्वासा उवाच ॥ तद्वत्फाल्गुनमासे तु या
शुक्लैकादशी भवेत् ॥ तामुपोष्य विधानेन हरिमाराधयेत्सुधीः ॥१॥ नरसिंहाय पादौ तु गोविन्दायेत्युरू तथा ॥ कटिं विश्वभुजे पूज्य अनिरु
द्धेत्युरस्तथा॥२॥ कण्ठं तु शितिकण्ठाय पिङ्गकेशाय वै शिरः॥ असुरध्वंसनायेति चक्रं तोयात्मने तथा॥ ३॥ शंखमित्येव सम्पूज्य गंधपुष्पफलै
स्तथा ॥ तदग्रे घटमादाय सितवस्त्रयुगान्वितम् ॥४॥ तस्योपरि नृसिंहं तु सौवर्णं ताम्रभाजने॥ यथाविभवतः कृत्वा दारुवंशमयेऽपि वा॥५ ॥
रत्नगर्भे घटे स्थाप्य तं सम्पूज्य च मानवः॥ द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत्॥६॥ एवं कृते फलं प्राप्तं यत्पुरा पार्थिवेन तु ॥ तस्याहं सम्प्रव
क्ष्यामि वत्सनाम्ना महामुने॥७॥ आसीत् किम्पुरुषे वर्षे राजा परमधार्मिकः॥ भारतेति च विख्यातस्तस्य वत्सः सुतोऽभवत्॥८॥ स शत्रुभिर्जितः
संख्ये हृतकोशो द्विपादवान्॥ वनं प्रायात्सपत्नीको वसिष्ठस्याश्रमेऽवसत्॥९॥ कालेन महता सोऽथ वसिष्ठेन महात्मना॥ किं कार्यमिति स प्रोक्तो
वसस्यस्मिन्महाश्रमे ॥ १० ॥ राजोवाच ॥ भगवन्हृतकोशोऽहं हृतराज्योऽसहायवान् ॥ शत्रुभिर्हृतसर्वस्वो भवन्तं शरणं गतः ॥ ११ ॥

उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥ दुर्वासा उवाच ॥ एवमुक्तो वसिष्ठस्तु तस्येमां द्वादशीं मुने ॥ १२ ॥ आदिदेश विधानेन सोऽपि सर्वमथा
करोत् ॥ तस्य व्रतान्ते भगवान्नरसिंहस्तुतोष ह ॥ १३ ॥ चक्रं प्रादाच्च शत्रूणां विध्वंसनकरं मृधे ॥ तेनास्त्रेण स्वकं राज्यं जितवान्स नृपो
त्तमः ॥ १४ ॥ राज्ये स्थित्वाश्वमेधानां सहस्रमकरोत्प्रभुः ॥ अन्ते च विष्णुलोकाख्यं पदमागाच्च सत्तमः ॥ १५ ॥ एषा धन्या पापहरा
द्वादशी भवता मुने ॥ कथितां तां प्रसन्नेन श्रुत्वा कुरु यथेप्सितम् ॥ १६ ॥ इति श्रीवराहपुराणे धरणिव्रते नरसिंहद्वादशीव्रतं नाम द्वाचत्वा
रिंशोऽध्यायः ॥ ४२ ॥ अथ वामनद्वादशीव्रतम् ॥ दुर्वासा उवाच ॥ एवमेव मुने मासि चैत्रे सङ्कल्प्य द्वादशीम् ॥ उपोष्याराधयेद्भक्त्या
देवदेवं जनार्दनम् ॥ १ ॥ वामनायेति पादौ तु विष्णवे कटिमर्चयेत् ॥ वासुदेवाय जठरमुरः संकर्षणाय च ॥ २ ॥ कण्ठं विश्वभृते पूज्य
शिरो वै व्योमरूपिणे ॥ बाहू विश्वजिते पूज्यौ स्वनाम्ना शंखचक्रकौ ॥ ३ ॥ अनेन विधिनाभ्यर्च्य देवदेवं सनातनम् ॥ प्राग्वद्रत्नोदकं कुम्भं
सम्पूतं पुरतो न्यसेत् ॥ ४ ॥ प्रागुक्तपात्रे संस्थाप्य कांचनं वामनं बुधः ॥ यथाशक्त्या कृतं सर्वं सितयज्ञोपवीतिनम् ॥५॥ कुण्डिकां स्थाप
येत्पार्श्वे छत्रिकां पादुके तथा ॥ अक्षमालां च संस्थाप्य बृसिकां च विशेषतः ॥ ६॥ एतैरुपस्करैर्युक्तं प्रभाते ब्राह्मणाय च ॥ दापयेत्प्रीयतां
विष्णुर्ह्रस्वरूपीत्युदीरयेत् ॥ ७ ॥ मासनाम्ना तु संयुक्तं प्रादुर्भावाभिधानकम् ॥ प्रीयतामिति सर्वत्र विधिरेष प्रकीर्तितः ॥८॥ श्रूयते च पुरा
राजा हर्यश्वः पृथिवीपतिः ॥ अपुत्रः स तपस्तेपे पुत्रमिच्छंस्तपोधनः ॥ ९ ॥ तस्यैवं कुर्वतास्त्विष्टिं पुत्रार्थे मुनिसत्तम ॥ आजगाम हरिर्देवो
द्विजरूपं समाश्रितः ॥ १० ॥ स उवाच नृपं राजन् किं ते व्यवसितं त्विति ॥ पुत्रार्थमिति सोवाच तं विप्रः प्रत्युवाच ह ॥ ११ ॥ इदमेव
विधानं तु कुरु राजन्प्रयत्नतः ॥ एवमुक्त्वा तु राजानं क्षणादन्तर्हितः प्रभुः ॥ १२ ॥ राजापि तं चकाराशु मन्त्रवित्तं द्विजातये ॥ दरिद्राय
तथा प्रादाज्ज्योतिर्गर्भाय धीमते ॥ १३ ॥ यथादितेरपुत्रायाः स्वयं पुत्रत्वमागतः ॥ भगवंस्तेन सत्येन ममाप्यस्तु सुतो वरः ॥१४॥ अनेन
विधिनोक्तेन तस्य पुत्रोऽभवन्मुने ॥ उग्राश्व इति विख्यातश्चक्रवर्ती महाबलः ॥१५॥ अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ॥ भ्रष्टराज्यो
लभेद्राज्यं मृतो विष्णुपुरं व्रजेत् ॥ १६ ॥ क्रीडित्वा सुचिरं तत्र इह मर्त्यमुपागतः ॥ चक्रवर्ती भवेद्धीमान्ययातिरिव नाहुषः ॥ १७ ॥ इति

श्रीवराहपुराणे धरणिव्रते वामनद्वादशीव्रतं नाम त्रयश्चत्वारिंशोऽध्यायः ॥ ४३ ॥ अथ जामदग्न्यद्वादशीव्रतम् ॥ दुर्वासा उवाच ॥ वैश
सेऽप्येवमेवं तु संकल्प्य विधिना नरः॥ तद्वत्स्नानं मृदा कृत्वा ततो देवालयं व्रजेत् ॥ १ ॥ तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः ॥ जामद
ग्न्याय पादौ तु चोदरं सर्वधारिणे ॥ २ ॥ मधुसूदनायेति कटिमूरू श्रीवत्सधारिणे ॥ क्षत्रान्तकायेति भुजौ शितिकण्ठाय कूर्चकम् ॥ ३ ॥
स्वनाम्ना शङ्खचक्रौ तु शिरो ब्रह्माण्डधारिणे ॥ एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ॥ ४ ॥ विन्यसेत्स्थापितं तद्वद्वस्त्रयुग्मं विशेषतः ॥
वैणवेन तु पात्रेण तस्मिंस्तु स्थापयेद्धरिम् ॥ ५॥ जामदग्न्येन रूपेण कृत्वा सौवर्णमग्रतः ॥ दक्षिणे परशुं हस्ते तस्य देवस्य कारयेत् ॥ ६॥
अर्घगन्धैस्तु सम्पूज्य पुष्पैर्नानाविधैस्तथा ॥ ततस्तस्याग्रतः कृत्वा जागरं भक्तिभावितः ॥ ७ ॥ प्रभाते विमले सूर्ये ब्राह्मणाय निवेदयेत् ॥
एवं नियमयुक्तस्य तत्फलं तु निबोध मे ॥ ८ ॥ आसीद्राजा महाभागो वीरसेनो महाबलः ॥ अपुत्रः स पुरा तीव्रं तपस्तेपे महामनाः ॥ ९ ॥
चरतस्तु तपो घोरं याज्ञवल्क्यो महामुनिः ॥ आजगाम महायोगी तं द्रष्टुं नातिदूरतः ॥ १० ॥ तमायान्तमथो दृष्ट्वा ऋषिं परमवर्चसम् ॥
कृताञ्जलिपुटो भूत्वा राजाभ्युत्थानमाकरोत् ॥ ११ ॥ स पूजितो मुनिः प्राह किमर्थं क्रियते तपः ॥ राजन्कथय धर्मज्ञ किं कार्यं ते विवक्षि
तम् ॥ १२ ॥ राजोवाच ॥ अपुत्रोऽहं महाभाग नास्ति मे पुत्रसन्ततिः ॥ तेनेदं तप आस्थाय क्षपयिष्ये स्वतनुं द्विज ॥ १३ ॥ याज्ञवल्क्य
उवाच ॥ अलं ते तपसानेन महाक्लेशेन पार्थिव ॥ अल्पायासेन ते पुत्रो भविष्यति न संशयः ॥ १४ ॥ राजोवाच ॥ कथं मे भविता पुत्रः
स्वल्पायासेन वै द्विज ॥ एतन्मे कथय प्रीत्या भगवन्प्रणतस्य वै ॥ १५ ॥ दुर्वासा उवाच ॥ एवमुक्तो मुनिस्तेन पार्थिवेन यशस्विना ॥
आचख्यौ द्वादशीं चेमां वैशाखे सितपक्षजाम् ॥ १६ ॥ स हि राजा विधानेन पुत्रकामो विशेषतः ॥ उपोष्य लब्धवान्पुत्रं नलं परमधार्मि
कम् ॥ १७ ॥ योऽद्यापि कीर्त्यते लोके पुण्यश्लोको नरोत्तमः ॥ प्रासङ्गिकं फलं ह्येतद्व्रतस्यास्य महामुने ॥ १८ ॥ सुपुत्रो जायते तस्य
विद्या श्रीः कान्तिरुत्तमा ॥ इह जन्मनि किं चित्रं परलोके शृणुष्व मे ॥ १९ ॥ कल्पमेकं ब्रह्मलोक उषित्वाप्सरसां गणैः ॥ क्रीडन्ति ते पुनः
सृष्टौ जायन्ते चक्रवर्तिनः ॥ २० ॥ त्रिंशत्कल्पसहस्राणि जीवन्ते नात्र संशयः॥२१ ॥ इति श्रीवराहपुराणे द्वादशीमाहात्म्ये जामदग्न्यद्वादशी

व्रतं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ अथ श्रीरामद्वादशीव्रतम् ॥ दुर्वासा उवाच ॥ ज्येष्ठमासेऽप्येवमेव सङ्कल्प्य विधिना नरः ॥
अर्चयेत्परमं देवं पुष्पैर्नानाविधैः शुभैः ॥ १ ॥ नमो रामाभिरामाय पादौ पूर्वं समर्चयेत् ॥ त्रिविक्रमायेति कटिं धृतविश्वाय चोदरम् ॥ २ ॥
उरः संवत्सरायेति कण्ठं संवर्त्तकाय च ॥ सर्वास्त्रधारिणे बाहू स्वनाम्नाब्जरथाङ्गकैः ॥ ३ ॥ सहस्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः ॥
एवमभ्यर्च्य विधिवत्प्राग्वत्कुम्भं तु विन्यसेत् ॥ ४ ॥ प्राग्वद्वस्त्रेण संछन्नं सौवर्णौ रामलक्ष्मणौ ॥ अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय
तो ॥ ५ ॥ दातव्यौ मनसा काममहिता पुरुषेण तु ॥ अपुत्रेण पुरा पृष्टो राज्ञा दशरथेन च ॥ ६ ॥ पुत्रकामपरः पश्चाद्वसिष्ठः
परमार्चितः ॥ इदमेव विधानं तु कथयामास स द्विजः ॥ ७ ॥ प्राग्रहस्यं विदित्वा तु स राजा कृतवानिदम् ॥ तस्य
पुत्रः स्वयं जज्ञे रामनामा महाबली ॥ ८ ॥ चतुर्द्धा सोऽव्ययो विष्णुः परितुष्टो महामुने ॥ एतदैहिकमाख्यानं पारत्रिकमथो शृणु ॥ ९ ॥
तावद्भोगान्भुञ्जते स्वर्गलोके यावदिन्द्रो देवसङ्घाश्च सर्वे ॥ अतीतकाले पुनरेत्य मर्त्यं भवेत्स राजा शतयज्ञयाजी ॥ १० ॥ निष्काम एवं व्रत
मस्य कृत्वा नश्यन्ति पापानि च तस्य पुंसः ॥ प्राप्नोति निर्वाणमलं च (?) शाश्वतम् ॥ ११ ॥ इति श्रीवराहपुराणे श्रीरामद्वादशीव्रतं नाम पंचच
त्वारिंशोऽध्यायः ॥ ४५ ॥ अथ श्रीकृष्णद्वादशी व्रतम् ॥ दुर्वासा उवाच ॥ आषाढेऽप्येवमेव स्यात्सङ्कल्प्य विधिना नरः ॥ चक्रपाणयेति
भुजौ कण्ठं भूपतये तथा ॥ १ ॥ स्वनाम्ना शङ्खचक्रौ तु पुरुषायेति वै शिरः ॥ एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ॥ २ ॥ विन्यस्य
वस्त्रसंयुक्तं तस्योपरि ततो न्यसेत् ॥ काञ्चनं वासुदेवं तु चतुर्व्यूहं सनातनम् ॥ ३ ॥ तमभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥ प्राग्वत्तं
ब्राह्मणे दद्याद्वेदवादरते तथा ॥ ४ ॥ एवं नियमयुक्तस्य यत्पुण्यं तच्छृणुष्व मे ॥ वसुदेवोऽभवच्छ्रेष्ठो यदुवंशविवर्द्धनः ॥ ५ ॥ देवकी तस्य
भार्या तु समानव्रतधारिणी ॥ सा त्वपुत्राभवत्साध्वी पतिधर्म्मपरायणा ॥ ६ ॥ तस्य कालेन महता नारदोऽभ्यगमद्गृहम् ॥ पूजितो वसुदेवेन
भक्त्यासौ वाक्यमब्रवीत् ॥ ७ ॥ वसुदेव शृणुष्वेदं देवकार्यं ममानघ ॥ श्रुत्वैतां च कथां शीघ्रमागतोऽस्मि तवान्तिकम् ॥ ८ ॥ पृथिवी देव
सामितिं मया दृष्टा यदूत्तम ॥ गत्वा च जलपती भारं न शक्ता उद्वहितुं सुराः ॥ ९ ॥ पीडयन्ति समेता मां तान् हनध्वं सुरोत्तमाः ॥ एवमुक्ताः

पृथिव्या ते देवा नारायणं गताः ॥ मनसा ध्यातमात्रः स देवः प्रत्यक्षतां ययौ ॥१०॥ उवाच स सुरश्रेष्ठः स्वयं कार्यमिदं सुराः ॥ साधयामि
न सन्देहो मर्त्यङ्गत्वा मनुष्यवत् ॥ ११ ॥ किन्त्वाषाढे शुक्लपक्षे या नारी सह भर्तृणा ॥ उपोष्याति मनुष्येषु तस्या गर्भे भवाम्यहम् ॥ १२ ॥
एवमुक्त्वा गता देवाः स्वयं चाहमिहागतः ॥ उपदिष्टं तु भवतः अपुत्रस्य विशेषतः ॥ १३॥ एतां च द्वादशीं कृत्वा वसुदेवो महायशाः ॥ पुत्रं
लेभे स कृष्णाख्यं महतीं च श्रियं तथा॥ १४॥भुक्त्वा प्राज्यश्रिय सोऽथ गतिं परमिकां ययौ ॥ एष ते विधिरुद्दिष्ट आषाढे मासि वै मुने ॥ १५॥
इति श्रीवराहपुराणे श्रीकृष्णद्वादशीव्रतं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ अथ बुद्धद्वादशीव्रतम् ॥ दुर्वासा उवाच ॥ श्रावणे
मासि शुक्लायामेकादश्यां चरेद्व्रतम् ॥ अर्चयेत्पूर्वविधिना गन्धपुष्पैर्जनार्दनम् ॥ १ ॥ दामोदराय पादौ तु हृषीकेशाय वै कटिम् ॥ सनात
नेति जठरमुरः श्रीवत्सधारिणे ॥ २ ॥ चक्रपाणयेति भुजौ कण्ठं च हरये तथ ॥ मुञ्जकेशायेति शिरो भद्राय च शिखां तथा ॥ ३ ॥
एवं सम्पूज्य संस्थाप्य कुम्भं पूर्ववदेव तु ॥ संवेष्टय वस्त्रयुग्मेन तस्योपरि ततो न्यसेत् ॥ ४ ॥ काञ्चनं देवदेवं तु दामोदरसनामकम् ॥ तम
भ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥ ५ ॥ प्राग्वत्तं ब्राह्मणे दद्याद्वेदवेदाङ्गपारगे ॥ एवं नियमयुक्तस्य प्रभावं तच्छृणुष्व मे ॥ ६ ॥ एष
वै विधिरुद्दिष्टः श्रावणे मासि वै मुने ॥ यत्तस्याश्च प्रभावं तच्छृणु पापप्रणाशनम् ॥ ७ ॥ पुरा कृतयुगे राजा नृगो नाम महाबलः ॥ बभ्राम
स वनं घोरं मृगयासक्तमानसः ॥ ८ ॥ स कदाचित्तुरङ्गेण गतो दूरं महद्वनम् ॥ व्याघ्रसिंहगजाकीर्णं दस्युसर्पनिषेवितम् ॥ ९ ॥ एकाकी तत्र
राजा तु अश्वं मुच्य तरोरधः ॥ स्वयं कुशमथास्तीर्य सुतो दुःखसमन्वितः ॥ १० ॥ तावत्तत्रैव लुब्धानां सहस्राणि चतुर्दश ॥ आगतानि
मृगान्हन्तुं रात्रौ राज्ञः समन्ततः ॥ ११ ॥ तत्रापश्यन् ततः सुप्तं हेमरत्नविभूषितम् ॥ नृगं राजानमत्युग्रं श्रिया परमया युतम् ॥ १२ ॥ ते
गत्वा त्वरितं व्याधाः स्वभर्त्रे तं न्यवेदयन् ॥ सोऽपि रत्नसुवर्णार्थं राजानं हन्तुमुद्यतः ॥ १३ ॥ तुरगस्य च हेतोस्तु निस्त्रिंशान्वनचारिणः ॥
राजानं सुप्तमासाद्य निगृहीतुं प्रचक्रमुः ॥१४॥ तावद्राज्ञः शरीरात्तु श्वेताभरणभूषिता ॥ नारी काचित्समुत्तस्थौ स्रक्चन्दनविभूषिता ॥१५॥
उत्थाय चक्रमादाय ते म्लेच्छा विनिपातिताः ॥ दस्यून्निहत्य सा देवी तस्य राज्ञस्तनु पुनः ॥ १६ ॥ प्रविशन्त्याशु राजापि प्रतिबुद्धः प्रदि

हृवान् ॥ म्लेच्छांस्तु निहतान्दृष्ट्वा तां स्वमूर्त्तौ व्यपकृताम् ॥ १७ ॥ अश्वमारुह्य स पुनर्वामदेवाश्रमं ययौ ॥ तत्रापृच्छदृषिं भक्त्या का स्त्री
के ते निपातिताः ॥ १८ ॥ एतत्कार्यमृषे मह्यं प्रसीद कथयस्व मे ॥ वामदेव उवाच ॥ त्वमासीच्छूद्रजातीयः अन्यजन्मानि पार्थिव ॥ १९ ॥
तत्र त्वया ब्राह्मणेभ्यः श्रुता चेयं कृता पुरा ॥ श्रावणस्य तु मासस्य शुक्लपक्षेषु द्वादशी ॥ २० ॥ सा विधानात्त्वया राजन्भक्त्या च समुपो
षिता ॥ उपोषितायां तस्यां तु राज्यं लब्धं त्वयाऽनघ ॥ २१ ॥ सर्वापत्सु च सा देवी भवन्तं परिरक्षति ॥ यया विनिहताः क्रूरा म्लेच्छाः
पापसमान्विताः ॥ २२ ॥ भवांश्च रक्षितो राजन् श्रावणद्वादशीति सा ॥ एकैव पाति चापत्सु राज्यमेकैव यच्छति ॥ २३ ॥ किं पुनर्द्वादशे
तास्तु याम्य ऐन्द्रं च गच्छति ॥ २४ ॥ इति श्रीवराहपुराणे धरणीव्रते बुद्धद्वादशीव्रतं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ अथ कल्किद्वा
दशीव्रतम् ॥ दुर्वासा उवाच ॥ तद्वद्भाद्रपदस्यापि या शुक्लैकादशी भवेत् ॥ तस्यां सङ्कल्प्य विधिना देवदेवं समर्चयेत् ॥ १ ॥ नमोऽस्तु
कल्किने पादौ हृषीकेशाय वै कटिम् ॥ म्लेच्छविध्वंसनायेति जगन्मूर्त्तें तथोदरम् ॥ २ ॥ शितिकण्ठाय कण्ठं तु खड्गपाणे तथा भुजौ ॥ चतुर्भु
जायेति हस्तौ विश्वमूर्त्तें तथा शिरः ॥ ३ ॥ एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ॥ विन्यसेत्कल्किनं देवं सौवर्णं तत्र कारयेत् ॥४ ॥
सितवस्त्रेण संयुक्तं गन्धपुष्पोपशोभितम् ॥ कृत्वा प्रभाते विप्राय प्रदेयं शास्त्रवित्तमे ॥ ५ ॥ एवं कृते भवेद्यत्तु तन्निबोध महामुने ॥ पूर्वं राजा
विशालोऽभूत्काशीपुर्यां महाबलः ॥ ६ ॥ गोत्रजैर्हृतराज्योऽसौ गन्धमादनमाविशत् ॥ तस्य द्रोण्यां महाराज बदरीं प्राप शोभनाम् ॥ ७ ॥
हृतराज्यो विशेषेण गतश्रीको नरोत्तमः ॥ कदाचिदागतौ तत्र पुराणावृषिसत्तमौ ॥ ८ ॥ नरनारायणौ देवौ सर्वदेवनमस्कृतौ ॥
तौ दृष्ट्वा तत्र राजानं पूर्वागतमरिन्दमौ ॥९॥ ध्यायन्तं परमं ब्रह्म विष्ण्वाख्यं परमं पदम् ॥ तौ प्रीतावूचतुश्चैवं राजानं क्षीणकल्मषम् ॥१०॥
वरं वृणीष्व राजेन्द्र वरदौ स्वस्तवागतौ ॥ राजोवाच ॥ भवन्तौ कौ न जानामि कस्य गृह्णाम्यहं वरम् ॥ ११ ॥ आराधयामि यं तस्माद्वर
मिच्छामि शोभनम् ॥ एवमुक्तौ तु तौ प्रोचुः कमाराधयसे प्रभो ॥ १२ ॥ कं वा वरं वृणीषि त्वं कथयस्व कुतूहलात् ॥ एवमुक्तस्ततो राजा
विष्णुमाराधयाम्यहम् ॥ १३ ॥ कथयित्वा स्थितस्तूष्णीं ततस्तावूचतुः पुनः ॥ राजंस्तस्यैव देवस्य प्रसादादावयोर्वरः ॥ १४ ॥ दातव्यस्ते

वरं ब्रूहि कस्ते मनसि वर्त्तते ॥ राजोवाच ॥ यथा यज्ञेश्वरं देवं यज्ञैर्विविधदक्षिणैः ॥ १५ ॥ यष्टुं समर्थता मे स्यात्तथा मे ददतां वरम् ॥
स्वयं नारायणो देवो लोकमार्गप्रदर्शकः ॥ १६ ॥ मया सह तपः कुर्वन्बदर्यां लोकभावनः ॥ अयं मत्स्योऽभवत्पूर्वं पुनः कूर्म्मः सुरूप
वान् ॥ १७ ॥ वराहश्चाभवद्देवो नरसिंहस्ततोऽभवत् ॥ वामनस्तु ततो जातो जामदग्न्यो महाबलः ॥ १८ ॥ पुनर्दाशरथिर्भूत्वा मोहयामास
पार्थिवः ॥ सकलान्दस्यवो म्लेच्छान्घातयित्वा महीमिमाम् ॥ १९॥ प्रकृतिस्थां चकारायं स एष भगवान्हरिः ॥ नारसिंहेण रूपेण तद्वत्पाप
भयान्नरैः ॥ २० ॥ वामनं मोहनाशाय वित्तार्थे जमदग्निजम् ॥ क्रूरशत्रुविनाशाय यजेद्दाशरथिं बुधः ॥ २१ ॥ बलकृष्णौ यजेद्धीमान्पुत्र
कामो न संशयः ॥ रूपकामो यजेद्बुद्धं शत्रुघाताय कल्किनम् ॥ २२ ॥ एवमुक्त्वा नरस्तस्य इमामेवाब्रवीन्मुनिः ॥ द्वादशीं कृतवान्सोऽपि
चक्रवर्त्ती बभूव ह ॥ २३ ॥ तस्यैव नाम्ना बदरी विशालाख्याभवन्मुने ॥ इह जन्मनि राजासौ राज्यं कृत्वा त्वियाद्वनम् ॥ यज्ञैश्च विविधै
रिष्ट्वा परं निर्वाणमाप्तवान् ॥ २४ ॥ इति श्रीवराहपुराणे कल्किद्वादशीव्रतं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ अथ पद्मनाभद्वादशीव्रतम् ॥
दुर्वासा उवाच ॥ तद्वदाश्वयुजे मासि द्वादशी शुक्लपक्षजा ॥ तस्यामभ्यर्चयेद्देवं पद्मनाभं सनातनम् ॥ १ ॥ पद्मनाभाय पादौ तु कटिं वै पद्म
योनये ॥ उदरं सर्वदेवाय पुष्कराक्षाय वै उरः ॥ २ ॥ अव्ययाय तथा पाणिं प्राग्वदस्त्राणि पूजयेत् ॥ प्रभवाय शिरः पूज्य प्राग्वदग्रे घटं
न्यसेत् ॥ ३ ॥ तस्मिन्सौवर्णकं देवं पद्मनाभं तु विन्यसेत् ॥ तमेव देवं सपूज्य गन्धपुष्पादिभिः क्रमात् ॥ ४ ॥ प्रभातायां तु शर्वर्यां ब्राह्म
णाय निवेदयेत् ॥ एवं कृते तु यत्पुण्यं तन्निबोध महामते ॥ ५॥ आसीत्कृतयुगे राजा भद्राश्वो नाम वीर्यवान् ॥ यस्य नाम्नाभवद्वर्षं भद्राश्वं
नाम नामतः ॥ ६ ॥ तस्यागस्त्यः कदाचित्तु गृहमागत्य सत्तमः ॥ उवाच सप्तरात्रं तु वसामि भवतो गृहे ॥ ७ ॥ तं राजा शिरसा नत्वा
स्थीयतामित्यभाषत ॥ तस्य कान्तिमती नाम भार्या परमशोभना ॥ ८॥ तस्यास्तेजः समभवद्द्वादशादित्यसन्निभम् ॥ शतानि पञ्च
तस्यासन्सपत्नीनां यतव्रताः ॥ ९ ॥ ता दास्य इव कर्माणि कुर्वन्त्यहरहः शुभाः ॥ महाभागा कान्तिमती भार्या तस्य विशेषतः ॥ १० ॥
तामगस्त्यस्तथा दृष्ट्वा रूपतेजोऽन्वितां शुभाम् ॥ सपत्न्यश्च भयात्तस्याः कुर्वन्त्यः कर्म्म शोभनाः ॥ ११ ॥ राजा तु तस्या मुदितं मुख

मेवान्वलोकयत् ॥ एवम्भूतामथो दृष्ट्वा राज्ञीं परमशोभनाम् ॥१२॥ साधु साधु जगन्नाथेत्याहागस्त्यः प्रहर्षितः ॥ द्वितीये दिवसेऽप्येवं राज्ञीं दृष्ट्वा महाप्रभाम् ॥ १३ ॥ अहो मुष्टमहो मुष्टं जगदेतच्चराचरम् ॥ इत्यगस्त्यो द्वितीयेऽह्नि राज्ञीं दृष्ट्वाभ्युवाच ह ॥ १४ ॥ तृतीयेऽहनि तां दृष्ट्वा पुनरेवमुवाच ह ॥ अहो मूढा न जानन्ति गोविन्दं परमेश्वरम् ॥ १५ ॥ य एकेन दिनेनैव राज्ञस्तुष्टः प्रदत्तवान् ॥ चतुर्थे दिवसे हस्ता वुत्क्षिप्य पुनरब्रवीत् ॥१६॥ साधु साधु जगन्नाथ स्त्री शूद्राः साधु साध्विति ॥ द्विजाः साधु नृपाः साधु वैश्याः साधु पुनः पुनः ॥ १७॥ साधु भद्राश्व साधुस्त्वं साधु भोऽगस्त्य साधु ते॥साधु प्रह्लाद साधुस्ते ध्रुव साधो महाव्रत ॥१८॥ एवमुक्त्वा ननर्त्तोच्चैरगस्त्यो राजसन्निधौ ॥ एव म्भूतं च तं दृष्ट्वा सपत्नीको नृपोत्तमः ॥१९॥ किं हर्षकारणं ब्रह्मन्येनेत्थं नृत्यते भवान् ॥ अगस्त्य उवाच ॥ अहो मूर्खः कुराजा त्वं अहो मूर्खोऽनुगास्त्वमी ॥ २० ॥ अहो पुरोहिता मूर्खा ये न जानन्ति मे मतम् ॥ एवमुक्ते ततो राजा कृताञ्जलिरभाषत ॥ २१ ॥ न जानीमो वयं ब्रह्मन्प्रश्नमेतत्त्वयेरितम् ॥ कथयस्व महाभाग यद्यनुग्रहकृद्भवान् ॥ २२ ॥अगस्त्य उवाच ॥ इयं राज्ञी पुरा चाभूद्दासी वैश्यस्य वै गृहे ॥ नगरे हरिदत्तस्य त्वमस्याः पतिरेव च ॥ २३ ॥ तस्यैव कर्म्मकारोऽभूच्छूद्रः सेवनतत्परः ॥ स वैश्योऽश्वयुजे मासि द्वादश्यां नियतः स्थितः ॥ २४ ॥ स्वयं विष्ण्वालयं गत्वा पुष्पधूपादिभिर्हरिम्॥ अभ्यर्च्य स्वगृहं प्रायाद्भवन्तौ रक्षपालकौ ॥ २५ ॥ स्थाप्य द्वावपि दीपानां ज्वलनार्थं महामते ॥ गते वैश्ये भवन्तौ तौ दीपान्प्रज्वाल्य संस्थितौ ॥ २६ ॥ यावत्प्रभाता रजनी निशामेकां नरोत्तम ॥ ततः काले मृतौ तौ तु उभौ द्वावपि दम्पती ॥ २७ ॥ तेन पुण्येन ते जन्म प्रियव्रतगृहेऽभवत् ॥ इयं पत्नी तु ते जाता पुरा वैश्यस्य दासिका ॥२८॥ पारक्य स्यापि दीपस्य ज्वालितस्य हरेर्गृहे ॥ यः पुनः स्वेन वित्तेन विष्णोरग्रे प्रदीपकम् ॥ २९ ॥ ज्वालयेत्तस्य यत्पुण्यं तत्संख्यातुं न शक्यते ॥ संवत्सरार्द्धे त्रेतायां सममेतन्न संशयः ॥३१ ॥ तेन साधो हरे साधु चेत्युक्तं वचनं मया ॥ ३० ॥ पूर्णे संवत्सरे भक्तिं हरेः कृत्वा विचक्षणः ॥ त्रिमासे द्वापरे भक्त्या पूजयँल्लभते फलम् ॥ नमो नारायणेत्युक्त्वा कलौ तु लभते फलम् ॥ ३२ ॥ तेन मुष्टं जगत्सर्वं भक्तिमात्रं मये रितम् ॥ पारक्यदीपस्योत्कर्षो देवाग्रे फलमीदृशम् ॥ ३३ ॥ भो राजन् यत्त्वया प्राप्तं फलमेतन्मयेरितम् ॥ अहो मूढा न जानन्ति हरेर्दीप

क्रियाफलम् ॥ ३४ ॥ एवंविधा द्विजाग्रे च राजानो ये च भक्तितः ॥ यजन्ते विविधैर्यज्ञैस्तेन ते साधवः स्मृताः ॥ ३५ ॥ अहं तमेव
मुक्त्वान्यं न पश्यामि महीतले ॥ तेन साधो अयमस्त्येति मया चात्मा प्रशंसितः ॥३६॥ सा स्त्री धन्या स शूद्रस्तु तथा धन्यतरो मतः ॥भर्तुः
शुश्रूषणं कृत्वा तत्परोक्षे हरेरिति ॥३७॥ सा स्त्री धन्या तथा शूद्रो द्विजशुश्रूषणे रतः ॥ तदाज्ञया हरेर्भक्तिः स्त्रीशूद्रो तेन साध्विति ॥३८॥
आसुरं भावमाश्रित्य प्रह्लादः पुरुषोत्तमम् ॥ मुक्त्वा चान्यं न जानाति तेनासौ साधुरुच्यते ॥ ३९ ॥ प्रजापतिकुले भूत्वा बाल एव वनं
गतः ॥ आराध्य विष्णुं प्राप्तश्च स्थानं परमशोभनम् ॥४०॥तेन साधो ध्रुवेत्येवं मयोक्तं राजसत्तम ॥इति राजा वचः श्रुत्वा त्वगस्त्यस्य महा
त्मनः ॥४१॥अल्पोपदेशं राजासौ पप्रच्छ मुनिपुङ्गवम् ॥ अगस्त्यश्च महाभागः कार्तिक्यां पुष्करं व्रजन्॥४२॥गतेऽगस्त्ये प्रगच्छन्वै भद्रा
श्वस्य निवेशनम्॥पृष्टश्च राजा तामेव द्वादशीं मुनिसत्तमः॥४३॥दुर्वासा उवाच ॥ इदमेव मया तुभ्यं कथितं ते तपोधन॥ कथयित्वा पुनर्वा
क्यमगस्त्यो नृपसत्तमम्॥४४॥उवाच पुष्करं यामि सपुत्रं चास्तु ते गृहम् ॥ एवमुक्त्वा जगामाशु सद्योऽदर्शनतां मुनिः॥४५॥ द्वादशीं पद्म
नाभस्य राजा स विधिना ततः ॥उपोष्य परमं काममिह जन्मनि चाप्तवान् ॥४६॥ पुत्रपौत्रैः परिवृतो भुक्त्वा भोगानथोत्तमान् ॥ पद्मनाभ
प्रसादेन वैष्णवं स्थानमाप सः ॥ ४७ ॥ इति श्रीवराहपुराणे पद्मनाभद्वादशीव्रतं नामोनपञ्चाशोऽध्यायः ॥४९॥अथ धरणीव्रतम् ॥ दुर्वासा
उवाच ॥ गत्वा तु पुष्करं तीर्थमगस्त्यो मुनिपुङ्गवः ॥ कार्त्तिक्यामाजगामाशु पुनर्भद्राश्वमन्दिरम् ॥ १ ॥ तमागतं मुनिं प्रेक्ष्य राजा परम
धार्मिकः ॥ अर्घपाद्यादीभिः पूज्य कृतासनपरिग्रहम् ॥२॥ उवाच हर्षितो राजा तमृषिं संशितव्रतम् ॥ राजोवाच ॥ भगवन्कथितं पूर्वं त्वया
ऋषिवरोत्तम ॥३॥ आश्विने मासि द्वादश्यां विधानं तत्कृतं मया ॥ इदानीं कार्तिके मासि यत्स्यात्पुण्यं वदस्व मे ॥४॥ अगस्त्य उवाच ॥
कार्तिकी द्वादशी राजन्नुक्ता परमपावनी ॥ उपोष्य विधिना येन यच्चास्याः प्राप्यते फलम् ॥५॥ तदहं संप्रवक्ष्यामि शृणोत्ववहितो भवान् ॥
पूर्वोक्तविधिना सम्यक्संकल्प्य स्नानमाचरेत् ॥६॥ तमेव पूजयेद्देवं नारायणमकल्मषम् ॥ नमः सहस्रशिरसे शिरः सम्पूजयेद्धरेः ॥७॥ पुरुषा
येति च भुजौ कण्ठं वै विश्वरूपिणे ॥ ज्ञानास्त्रायेति चास्त्राणि श्रीवत्साय तथा ह्युरः ॥ ८ ॥ जगद्ग्रसिष्णवे तुभ्यमुदरं दिव्यमूर्तये ॥ कटिं

सहस्रपादाय पादौ देवस्य पूजयेत् ॥९॥ अनुलोमेन देवेशं पूजयित्वा विचक्षणः ॥ नमो दामोदरायेति सर्वाङ्गं पूजयेद्धरेः ॥१०॥एवं सम्पूज्य
विधिना तस्याग्रे चतुरो घटान्॥स्थापयेद्रत्नगर्भांस्तु सितचन्दनचर्चितान् ॥११॥ स्रग्दामबद्धग्रीवांस्तु सितवस्त्रावगुण्ठितान् ॥ स्थापितांस्ताम्र
पात्रैस्तु तिलपूर्णैः सकांचनैः ॥१२॥ चत्वारः सागरांश्चैव कल्पयेद्राजसत्तम ॥ तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिम् ॥ १३ ॥ योगीश्वरं
योगिगम्यं पीताम्बरधरं विभुम् ॥ एवं सम्पूज्य विधिवज्जागरं तत्र कारयेत् ॥१४॥ कुर्याच्च वैष्णवं यज्ञं यजेद्योगीश्वरं हरिम्॥ षोडशारे तथा
चक्रे योगिभिर्बहुभिः कृते॥१५॥एवं कृत्वा प्रभातेषु ब्राह्मणाय निवेदयेत्॥चत्वारः सागरा देयाश्चतुर्णां पञ्चमस्य च ॥१६॥योगीश्वरं तु देवेशं
दद्यात्प्रयतमानसः ॥ वेदार्थं तु समं दत्तं द्विगुणं तद्विदे तथा ॥ १७ ॥ आचार्ये पञ्चरात्राणां सहस्रगुणितं भवेत्॥ यस्त्विमं सरहस्यं तु समन्त्रं
चोपपादयेत् ॥ १८॥ विधानं तस्य वै दत्तं कोटिकोटिगुणोत्तरम् ॥ गुरौ सति तु यश्चान्यमाश्रयेत्पूजयेत्कुधीः ॥ १९ ॥ स दुर्गतिमवाप्नोति
दत्तमस्य च निष्फलम् ॥ प्रयत्नेन गुरोः पूर्वं पश्चादन्यस्य दापयेत् ॥२०॥ अविद्यो वा सविद्यो वा गुरुरेव जनार्दनः ॥ मार्गस्थो वाप्यमार्गस्थो गुरुरेव
परा गतिः ॥ २१ ॥ प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते ॥ युगकोटिं स नरके पच्यते पुरुषाधमः ॥ २२ ॥ एवं दत्त्वा विधानेन द्वादश्यां
विष्णुमर्च्य च ॥ विप्राणां भोजनं दद्याद्यथाशक्ति सदक्षिणम् ॥ २३ ॥ धरणीव्रतमेतद्धि पुरा कृत्वा प्रजापतिः ॥ प्राजापत्यं तथा लेभे मुक्तिं
ब्रह्म च शाश्वतम् ॥ २४ ॥ तथा च हैहयो राजा कृतवीर्यो नराधिपः ॥ कार्त्तवीर्यं सुतं लेभे परं ब्रह्म च शाश्वतम् ॥२५॥ शकुन्तलाप्येव
मेव व्रतं कृत्वा महामते ॥ लेभे च भरतं पुत्रं दौष्यन्तं चक्रवर्त्तिनम् ॥ २६ ॥ तथातीताश्च राजानो वेदोक्ताश्चक्रवर्त्तिनः ॥ अनेन विधिना
प्राप्ताश्चक्रवर्त्तित्वमुत्तमम् ॥ २७ ॥ धरण्या चापि पाताले मग्नया च पुरा कृतम् ॥ व्रतमेतत्ततो नाम्ना धरणीव्रतमुत्तमम् ॥ २८ ॥ समाप्तेऽ
स्मिन्धरा देवी हरिणा क्रोडमूर्त्तिना ॥ उद्धृता चापि तुष्टेन स्थापिता नौरिवाम्भसि ॥ २९ ॥ धरणीव्रतमेतद्धि कीर्त्तितं ते मया मुने ॥ य
इदं शृणुयाद्भक्त्या यश्च कुर्यान्नरोत्तमः ॥ ३० ॥ सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ ३१ ॥ इति श्रीवराहपुराणे धरणीव्रतं नाम
पञ्चाशोऽध्यायः ॥ ५० ॥ अथाऽगस्त्यगीतारभ्यते ॥ श्रीवराह उवाच ॥ श्रुत्वा दुर्वाससो वाक्यं धरणीव्रतमुत्तमम् ॥ ययौ सत्यतपाः सद्यो

हिमवत्पार्श्वमुत्तमम् ॥ १ ॥ पुष्पभद्रा नदी यत्र शिला चित्रशिला तथा ॥ वटो भद्रवटो यत्र तत्र तस्याश्रमो बभौ॥२॥ तत्रोपरि महत्तस्य चरितं सम्भविष्यति ॥ धरण्युवाच ॥ बहुकल्पसहस्राणि व्रतस्यास्य सनातन ॥ ३ ॥ मया कृतस्य तपसस्तन्मया विस्मृतं प्रभो ॥ इदानीं त्वत्प्रसादेन पावनं स्मारितं मम ॥४॥ जातं जातिस्मरत्वं च विशोका परमेश्वर ॥ यदि नाम परं देव कौतुकं यदि वर्त्तते॥५॥अगस्त्यः पुन रागत्य भद्राश्वस्य निवेशनम् ॥ यच्चकार स राजा तु तन्ममाचक्ष्व भूधर॥६॥श्रीवराह उवाच ॥ प्रत्यागतमृषिं दृष्ट्वा भद्राश्वः श्वेतवाहनः ॥ वाराश्रनगतं दृष्ट्वा कृत्वा पूजां विशेषतः ॥ ७ ॥ अपृच्छन्मोक्षधर्माख्यं प्रश्नं सकलधारिणि ॥ भद्राश्व उवाच ॥ भगवन्कर्मणा केन छिद्यते भवसंसृतिः ॥ ८ ॥ किं वा कृत्वा न शोचन्ति मूर्त्तामूर्त्तोपपत्तिषु ॥ अगस्त्य उवाच ॥ शृणु राजन्कथां दिव्यां दूरासन्नव्यवस्थिताम् ॥ दृश्यादृश्यविभागोत्थां समाहितमना नृपः ॥९ ॥ नाहो न रात्रिर्न दृशो दिशश्च न द्यौर्न देवा न दिनं न सूर्यः॥तस्मिन्काले पशुपालेति राजा स पालयामास पशूननेकान् ॥१०॥ तान्पालयन् स कदाचिदिदृक्षुः पूर्वं समुद्रं च जगाम तूर्णम्॥अनन्तपारस्य महोदधेस्तु तीरे वनं तत्र वसन्ति सर्पाः ॥ ११ ॥ अष्टौ द्रुमाः कामवहा नदी च तीर्यक्च चोर्द्ध्वं बभ्रमुस्तत्र चान्ये ॥ पंच प्रधानाः पुरुषास्तथैकः स्त्रियं बिभ्रंते तेजसा दीप्य मानाम् ॥ १२ ॥ सापि स्त्री स्वे वक्षसि धारयन्ती सहस्रसूर्यप्रतिमं विशालम् ॥ तस्याधरस्त्रिविकारस्त्रिवर्णस्तं राजानं पश्य परिभ्रम न्तम् ॥ १३ ॥ तूष्णीम्भूता मृतकल्पा इवासन्नृपोऽप्यसौ तद्वनं संविवेश ॥ तस्मिन्प्रविष्टे विविशुः सर्वे एते भयादैक्यं गतवन्तः क्षणेन॥१४॥ तैः सर्पैः स नृपो दुर्विनीतैः संवेष्टितो दस्युभिश्चिन्तयानः ॥ कथं चैते न भविष्यन्ति येन कथं चैते संस्मृताः सम्भवेयुः ॥ १५ ॥ एवं राज्ञ श्चिन्तयतस्त्रिवर्णः पुरुषोऽपरः ॥ श्वेतं रक्तं तथा पीतं त्रिवर्णं धारयन्नरः ॥ १६ ॥ स संज्ञां कृतवान्मह्यमपरोऽथ क्व यास्यसि ॥ एवं तस्य ब्रुवा णस्य महन्नाम व्यजायत ॥ १७ ॥ तेनापि राजा संवीतः स बुध्यस्वेति चाब्रवीत् ॥ एवमुक्ते ततः स्त्री तु तं राजानं रुरोध ह ॥ १८ ॥ मायाततं तं मा भैष्ट ततोऽन्यः पुरुषो नृपम् ॥ संवेष्ट्यास्थितवान्वीरस्ततः सर्वेश्वरेश्वरः ॥ १९ ॥ ततोऽन्ये पंच पुरुषा आगत्य नृपसत्त मम् ॥ संवेष्ट्य संस्थिताः सर्वे ततो राजावरोधितः ॥ २०॥ रुद्ध्वा राजन्नितः सर्वे एकीभूतास्तु दस्यवः ॥ मथितुं शस्त्रमादाय लीनान्योऽन्यं

ततो भयात् ॥ २१ ॥ तैर्हीनैर्नृपतेर्वेश्म बभौ परमशोभनम् ॥ अन्येषामपि पापानां कोटिः साग्राभवन्नृप ॥ २२ ॥ गृहे भूः सलिलं वह्निः
सुखशीतश्च मारुतः ॥ सावकाशानि शुभ्राणि पञ्चैश्यये सुगुणानि च ॥ २३ ॥ एकैत्र तेषां सुचिरं संवेष्ट्याच्छाद्य संस्थितम् ॥ एवं स पशु
पालोऽसौ कृतवानञ्जसा नृप ॥ २४ ॥ तस्य तल्लाघवं दृष्ट्वा रूपं च नृपतेर्मृधे ॥ त्रिवर्णः पुरुषो राजन्नब्रवीद्राजसत्तमम् ॥ २५ ॥ अपुत्रोऽ
स्मि महाराज ब्रूहि किं करवाणि ते ॥ अस्माभिर्वद्धुमिच्छद्भिर्भवन्तं निश्चयः कृतः ॥ २६ ॥ यदि नाम कृताः सर्वे वयं देव पराजिताः ॥
एवमेव शरीरेषु लीनास्तिष्ठाम पार्थिव॥२७॥मय्येके तव पुत्रत्वं गते सर्वेषु सम्भवः॥ एवमुक्तस्ततो राजा तं नरं पुनरब्रवीत् ॥२८॥ पुत्रो भवति
मे कर्त्ता अन्येषामपि सत्तम॥पुष्यन्सुखैर्नरैर्भावैर्नाहं लिप्से कदाचन॥२९॥एवमुक्त्वा स नृपतिस्तमात्मजमथाकरोत्॥तैर्विमुक्तः स्वयं तेषां मध्ये
स विरराम ह॥३०॥इति श्रीवराहपुराणेऽगस्त्यगीतासु मोक्षधर्मनिरूपणं नामैकपंचाशोऽध्यायः॥५१॥अथ पुनस्तदेव॥ अगस्त्य उवाच ॥स
त्रिवर्णो नृपः सृष्टः स्वतंत्रत्वाच्च पार्थिवः ॥ अहंनामानमसृजत्पुत्रं पुत्रस्त्रिवर्णकः॥१॥ तस्यापि चाभवत्कन्याप्यवबोधस्वरूपिणी ॥ सा तु विज्ञा
नदं पुत्रं मनोज्ञं विससर्ज ह॥२॥ तस्यापि सर्वरूपाः स्युस्तनयाः पञ्च भोगिनः॥ यथासंख्येन पुत्रास्तु ते स्युरक्षाभिधानकाः॥३॥ एते पूर्वं दस्यव
स्तु ततो राज्ञा वशीकृताः ॥ अमूर्त्ता इव ते सर्वे चक्रुरायतनं शुभम् ॥ ४ ॥ नवद्वारं पुरं तस्य त्वेकस्तम्भं चतुष्पथम् ॥ नदीसहस्रसंकीर्णं
जलकृत्यसमाश्रितम् ॥५॥ तत्पुरं ते प्रविविशुरेकीभूतास्ततो नव ॥ पुरुषो मूर्त्तिमान्राजा पशुपालोऽभवत्क्षणात् ॥६॥ ततस्तत्पुरसंस्थस्तु
पशुपालो महानृपः ॥ संसूच्य वाचकाञ्छन्दान्वेदान्सस्मार तत्पुरे ॥ ७ ॥ आत्मस्वरूपिणो नित्यांस्तदुक्तानि व्रतानि च ॥ नियमान्क्रतव
श्चैव सर्वान्राजा चकार ह ॥ ८ ॥ स कदाचिन्नृपः खिन्नः कर्मकाण्डमरोचयत् ॥ सर्वज्ञो योगनिद्रायां स्थित्वा पुत्रं ससर्ज ह ॥ ९ ॥ चतुर्वक्त्रं ॥४७॥
चतुर्बाहुं चतुर्वेदं चतुष्पथम् ॥ तस्मादारभ्य नृपतेर्विषयः स्वपदा स्थितः ॥ १० ॥ तास्मिन्समुद्रे स नृपो वने तस्मिंस्तथैव च ॥ तृष्णादिषु
नृपश्चैव हस्त्यादिषु तथैव च ॥ समोऽभवत्कर्मकाण्डादनुजानन्महामते ॥ ११ ॥ इति श्रीवराहपुराणे अगस्त्यगीतासु मोक्ष० नि० नाम
द्वापंचाशोऽध्यायः ॥ ५२ ॥ तत्र पशुपालोपाख्यानम् ॥ भद्राश्व उवाच ॥ मत्प्रश्नविषये ब्रह्मन्कथेयं कथिता त्वया ॥ तस्याविर्भूतिरभवत्

कस्य केन कृतेन इ ॥ १ ॥ अगस्त्य उवाच ॥ आगतेयं कथा चित्रा सर्वस्य विषये स्थिता ॥ त्वद्देहे मम देहे च सर्वजन्तुषु सा
समा ॥ २ ॥ तस्याः सम्भूतिमिच्छन्यस्तस्योपायं स्वयं परम् ॥ पशुपालात्समुत्पन्नो यश्चतुष्पाच्चतुर्मुखः ॥ ३ ॥ स गुरुः स कथायास्तु
तस्याश्चैव प्रवर्त्तकः ॥ तस्य पुत्रः स्वरो नाम सत्यमूर्त्तिरसौ स्मृतः ॥ ४ ॥ तेन प्रोक्तं तु यत्किंचिच्चतुर्णां साधनं नृप ॥ ऋगर्थानां चतुर्भि
स्ते तद्भक्त्याराध्यतां ययुः ॥ ५ ॥ चतुर्णां प्रथमो यस्तु चतुःशृङ्गः समास्थितः ॥ वृषद्वितीयस्तत्प्रोक्तमार्गेणैव तृतीयकः ॥ चतुर्थस्त
त्प्रणीतस्तां पूज्य भक्त्याशु तं व्रजेत् ॥ ६ ॥ सत्यमूर्तेस्तु चरितं शुश्रुवुः प्रथमं नृप ॥ ब्रह्मचर्येण वर्तेत द्वितीयोऽस्य सनातनः ॥ ७ ॥
ततो भृत्यादिभरणं वृषभारोहणं नृषु ॥ वनवासश्च निर्दिष्ट आत्मस्थे वृषभे सति ॥ ८ ॥ अहमस्मिन्नद्दत्यन्यश्चतुर्द्धा चैकधा द्विधा ॥ भेद
भिन्नसहोत्पन्नास्तस्यापत्यानि जज्ञिरे ॥ ९ ॥ नित्यानित्यस्वरूपाणि दृष्ट्वा पूर्वं चतुर्मुखः ॥ चिन्तयामास जनकं कथं पश्याम्यहं नृप ॥ १० ॥
मदीयस्य पितुर्ये हि गुणा ह्यासन्महात्मनः ॥ न ते सम्प्रति दृश्यन्ते स्वरापत्येषु केषुचित् ॥ ११ ॥ पितुः पुत्रस्य यः पुत्रः स पितामह
नामकः ॥ एवं श्रुतिः स्थिता चेयं स्वरापत्येषु नान्यथा ॥ १२ ॥ क्वापि सम्पत्स्यते भावो द्रष्टव्यश्चापि ते पिता ॥ एवं नीतेऽपि किङ्कार्यमिति
चिन्तापरोऽभवत् ॥ १३ ॥ तस्य चिन्तयतः शस्त्रं पैतृकं पुरतो बभौ ॥ तेन पुत्रेण तं रोषान्ममन्थ स्वरमन्तिके ॥ १४ ॥ तस्मिन्मथित मात्रे तु
शिरस्तस्याविदुर्ग्रहम् ॥ नारिकेलफलाकारं चतुर्वक्त्रोऽन्वपश्यत ॥ १५ ॥ तच्चावृतं प्रधानेन दशधा संवृतो बभौ ॥ चतुष्पादेन शस्त्रेण चिच्छेद
तिलकाण्डवत् ॥ १६ ॥ प्रकामं तिलशश्छिन्ने तदमूलो न मे बभौ ॥ अहं त्वहं वद्भूतं तमप्येवमथाच्छिनत् ॥ १७ ॥ तस्मिन् भागे दृशं
कृत्वा हस्वमन्यमवेक्षत ॥ अहं भूतादि वः पश्च वदन्तं भूतिमान्तिकात् ॥ १८ ॥ तमप्येवमथो छित्वा पश्चामून्यान्ददर्श सः ॥ कृत्वावकाशं ते सर्वे
ज्वलन्त इदमन्तिकात् ॥ १९ ॥ तमप्यसङ्गशस्त्रेण चिच्छेद तिलकाण्डवत् ॥ तस्मिंश्छिन्ने दशांशेन हस्वमन्यमपश्यत ॥ २० ॥ पुरुषं रूपशस्त्रेणै
तच्छित्त्वशान्यमपश्यत ॥ तदद्धस्वं सितं सौम्यं तमप्येवं तथाकरोत् ॥ २१ ॥ एवं कृते शरीरं तु ददर्श स पुनः प्रभुः ॥ स्वकीयमेव तस्यान्तः पितरं
नृपसत्तम ॥ २२ ॥ त्रसरेणुसमं मूर्त्या त्वव्यक्तं सर्वजन्तुषु ॥ स मे दृष्ट्वा परं हर्षमुभौ हि स स्वरोऽभवत् ॥ २३ ॥ एवंविधोऽसौ पुरुषः स्वरनामा

महातपाः ॥ मूर्त्तिस्तस्य प्रवृत्ताख्यं निवृत्ताख्यं शिरो महत् ॥२४॥ एतस्मादेव तस्याशु कथया राजसत्तम ॥ सम्भूतिरभवद्राजा विवृतस्त्वेष एव
तु ॥ २५ ॥ एषेतिहासः प्रथमः सर्वस्य जगतो भृशम् ॥ य इमं वेत्ति तत्त्वेन साक्षात्कर्मपरो भवेत् ॥ २६ ॥ इति श्रीवराहपुराणे अग
स्त्यगीतासु पशुपालोपाख्यानं नाम त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥ अथोत्तमभर्तृप्राप्तिव्रतम् ॥ भद्राश्व उवाच ॥ विज्ञानोत्पत्तिकामस्य क
आराध्यो भवेद्द्विज ॥ कथं चाराध्यतेऽसौ हि एतदाख्याहि भो द्विज ॥ अगस्त्य उवाच ॥ विष्णुरेव सदाराध्यः सर्वैर्देवैरपि प्रभुः ॥ तस्योपायं
प्रवक्ष्यामि येनासौ वरदो भवेत् ॥ २ ॥ रहस्यं सर्ववेदानां मुनीनां मनुजन्मनाम् ॥ नारायणः परो देवस्तं प्रणम्य न सीदति ॥ ३ ॥ श्रूयते
च पुरा राजन्नारदेन महात्मना ॥ कथितं तुष्टिदं विष्णोर्व्रतमप्सरसां तथा ॥ ४ ॥ अप्सरस ऊचुः ॥ भगवन् ब्रह्मतनय भर्तृकामा वयं द्विज ॥
नारायणश्च भर्त्ता नो यथा स्यात्तत्प्रचक्ष्व नः ॥ ५ ॥ नारद उवाच ॥ प्रणामपूर्वकः प्रश्नः सर्वत्र विहितः शुभः ॥ स च मे न कृतो गर्वा
द्युष्माभिर्यौवनस्मयात् ॥ ६ ॥ तथापि देवदेवस्य विष्णोर्यन्नाम कीर्त्तितम् ॥ भवतीभिस्तथा भर्त्ता भवत्विति वरः कृतः ॥७॥ तन्नामोच्चारणा
देव कृतं सर्वं न संशयः ॥ इदानीं कथयाम्याशु व्रतं येन हरिः स्वयम् ॥ ८ ॥ वरदत्वमवाप्नोति भर्तृत्वं नियच्छति ॥ नारद उवाच ॥
वसन्ते शुक्लपक्षस्य द्वादशी या भवेच्छुभा ॥ ९ ॥ तस्यामुपोष्य विधिवन्निशायां हरिमर्चयेत् ॥ तस्योपरि रक्तपुष्पैर्मण्डलं कारयेद्बुधः ॥१०॥
नृत्यवादित्रगीतैश्च जागरं तत्र कारयेत् ॥ नमो भवायेति शिरः अनङ्गायेति वै कटिम् ॥ ॥ ११ ॥ कामाय बाहुमूले तु सुशास्त्रायेति चोद
रम् ॥ मन्मथायेति पादौ तु हरये इति सर्वतः ॥ १२ ॥ चक्षुर्द्दिक्षु भृशं तस्य प्रणतस्य ततो नृप ॥ एवंकृत्वा प्रभाते तु दापयेद्ब्राह्मणाय
च ॥ १३ ॥ वेदवेदाङ्गयुक्ताय सम्पूर्णाङ्गाय धीमते ॥ ब्राह्मणांश्च तथा पूज्य व्रतमेतत्समापयेत् ॥ १४ ॥ एवंकृते तथा विष्णुर्भर्त्ता वो
भविता ध्रुवम् ॥ पश्चात्तु रसमादाय इक्षुकाण्डात्सुशोभनात् ॥ १५ ॥ पुष्पैः सम्पूज्य देवेशं मल्लिकाजातिभिस्तथा ॥ अकृत्वा मत्प्रणामं तु
पृष्टो गर्वेण शोभनाः ॥ १६ ॥ अवमानस्य तस्यायं विपाको वो भविष्यति ॥ एतस्मिन्नेव सरसि अष्टावक्रो महामुनिः ॥ १७ ॥ तस्यो
पहासं कृत्वा तु शापं लप्स्यथ शोभनाः ॥ व्रतेनानेन देवेशं पतिं लब्ध्वाभिमानतः ॥ १८ ॥ अवमानेन हरणं गोपालैर्वो भविष्यति ॥ पुरा

इर्त्ता च कन्यानां देवो भर्त्ता भविष्यति ॥ १९॥ अगस्त्य उवाच ॥ एव मुक्त्वा स देवर्षिः प्रययौ नारदः क्षणात् ॥ ता अप्येतद्व्रतं चक्रुस्तुष्ट
श्चासां स्वयं हरिः ॥ २० ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासूत्तरखण्डउत्तमभर्तृप्राप्तिव्रतं नाम चतुःपंचाशोऽध्यायः ॥ ५४ ॥ अथ शुभ
व्रतम् ॥ अगस्त्य उवाच ॥ शृणु राजन्महाभाग व्रतानामुत्तमं व्रतम् ॥ येन सम्प्राप्यते विष्णुः शुभेनैव न संशयः ॥ १ ॥ मार्गशीर्षस्य मासे
तु प्रथमेऽह्नि समारभेत् ॥ सिते पक्षे दशम्यां तु एकभक्तं समाचरेत् ॥ २ ॥ ततो दशम्यां स्नत्वा तु मध्याह्ने विष्णुमर्चयेत् ॥ भुक्त्वा सङ्क
ल्पयेत्प्राग्वद्द्वादशीमक्षतां नृप ॥ ३ ॥ विप्रेभ्यश्च यवान्दद्यात्तामुपोष्य विधानतः ॥ सर्वदा च हरिर्वाच्यो दाने होमे तथार्चने ॥ ४ ॥ चातु
र्मास्यमथैवं तु क्षपित्वा राजसत्तम ॥ चैत्रादिषु पुनस्तद्वदुपोष्य प्रयतः सुधीः ॥ ५ ॥ सक्तुपात्राणि दद्यात्तु विप्रेभ्यः प्रीतिपूर्वकम् ॥ श्राव
णादिषु मासेषु शालीर्दद्यात्प्रयत्नतः ॥ ६ ॥ त्रिषु मासेषु यावच्च कार्त्तिकस्यादि रागतः ॥ तमप्येवं क्षपित्वा तु दशम्यां प्रयतः शुचिः ॥७॥
अर्चयित्वा हरिं भक्त्या मासनाम्ना विचक्षणः ॥ सङ्कल्प्य पूर्ववद्भक्त्या द्वादश्यां संयतेन्द्रियः॥८॥ एकादश्यां यथाशक्ति कारयेत्पृथिवीं नृप ॥
काञ्चनाङ्गीं च पाताल्कुलपर्वतसंयुताम् ॥ ९॥ भूमिन्यासविधानेन स्थापयेत्तां हरेः पुरः ॥ सितवस्त्रयुगच्छन्नां सर्वबीजसमन्विताम् ॥ १०॥
सम्पूज्य प्रियदत्तेति पञ्चरत्नैर्विचक्षणः ॥ जागरं तत्र कुर्वीत प्रभाते तु पुनर्द्विजान् ॥ ११ ॥ आमन्त्र्य संख्यया राजंश्चतुर्विंशति यत्नतः ॥
एकैकस्मै च गां दद्यादनड्वाहं सदक्षिणम् ॥ १२॥ एकैकं वस्त्रयुग्मं च अङ्गुलीयकमेव च ॥ कटकानि च सौवर्णकर्णाभरणकानि च ॥ १३ ॥
एकैकं ग्राममेतेषां राजा राजन् प्रदापयेत् ॥ स्वशक्त्या भरणं चैव दरिद्रस्य स्वशक्तितः ॥१४ ॥ यथाशक्त्या महीं कृत्वा काञ्चनीं गोयुगं
तथा ॥ वस्त्रयुग्मं च दातव्यं यथाविभवशक्तितः ॥ १५ ॥ सर्वाभरणसंयुक्तां गां च दद्याद्विशेषतः ॥ एवंकृते सकृद्राजन्तुष्टिमायाति वै
विभुः ॥ १६ ॥ रौप्यां वा पृथिवीं कृत्वा यथाविभवशक्तितः ॥ दद्यात्तां ब्राह्मणेभ्यश्च यथाशक्ति हरिं स्मरन् ॥ १७ ॥ तथा भोजनमेतेषा
मुपानच्छत्रिकां तथा ॥ पादुके च तथा दद्यात्कृष्णो दामोदरो मम ॥ १८ ॥ प्रीयतां सर्वदो देवो विश्वरूपो हरिर्मम ॥ दानं सुभोजनं दत्त्वा
सकृद्यत्फलमाप्यते ॥ १९ ॥ वर्षाणां च सहस्रेण कीर्त्तितुं नैव शक्यते ॥ तथाप्युद्देशतः किञ्चित्फलं वक्ष्यामि तेऽनघ ॥ २० ॥ व्रतेनानेन

यद्वृत्तं शुभं यस्य शृणुष्व तत् ॥ आसीदादियुगे राजा ब्रह्मवादी दृढव्रतः ॥ २१ ॥ स पुत्रकामः पप्रच्छ ब्रह्माणं परमेश्वरम् ॥ तस्येदं व्रत
माचख्यौ ब्रह्मा स कृतवान्पुरा ॥२२ ॥ तस्य व्रतान्ते विश्वात्मा स्वयं प्रत्यक्षतां गतः ॥ दृष्ट्वा प्रोवाच भो राजन्वरो मे व्रियतां नृप ॥२३ ॥
राजोवाच ॥ पुत्रं मे देहि देवेश वेदमन्त्रविशारदम् ॥ याजकं यजनासक्तं कीर्त्त्या युक्तं चिरायुषम् ॥ २४ ॥ असंख्याततगुणं चैव ब्रह्मभूतमक
ल्मषम् ॥ एवमुक्त्वा ततो राजा पुनर्वचनमब्रवीत् ॥ २५ ॥ ममाप्येतच्छुभं स्थानं प्रयच्छ परमेश्वर ॥ यत्तन्मुनिपदं नाम यत्र गत्वा न
शोचति ॥ २६ ॥ एवमस्त्विति तं देवः प्रोक्त्वा चादर्शनं गतः ॥ तस्यापि राज्ञः पुत्रोऽभूद्वसश्रीर्नाम नामतः ॥ २७ ॥ वेदवेदाङ्गसम्पन्नो
यज्ञयाजी बहुश्रुतः ॥ तस्य कीर्त्तिर्महाराज विस्तृता धरणीतले ॥ २८ ॥ राजापि तं सुतं लब्ध्वा विष्णुदत्तं प्रतापिनम् ॥ जगाम तपसे
युक्तः सर्वद्वन्द्वसहः प्रभुः ॥ २९ ॥ आराधयामास हरिं निराहारो जितेन्द्रियः ॥ हिमवत्पर्वते रम्ये स्तुतिं चापि सदापठत् ॥ ३० ॥ भद्राश्व
उवाच ॥ कीदृशी सा स्तुतिर्ब्रह्मन् यां चकार स पार्थिवः ॥ किंच तस्याभवद्देवं स्तुवतः पुरुषोत्तमम् ॥ ३१ ॥ दुर्वासा उवाच ॥ हिमवन्तं
समाश्रित्य राजा तद्गतमानसः ॥ स्तुतिं चकार देवस्य विष्णोरद्भुतकर्मणः ॥ ३२ ॥ राजोवाच ॥ क्षराक्षरं क्षीरसमुद्रशायिनं पृथ्वीधरं मूर्त्ति
मतां परम्पदम् ॥ अतीन्द्रियं विश्वभुजां पुरः कृतं नीराकृतिं स्तौमि जनार्दनं प्रभुम् ॥ ३३ ॥ त्वमादितस्त्वं परमार्थरूपी विभुः पुराणः पुरु
षोत्तमश्च ॥ अतीन्द्रियो वेदविदां प्रधानः प्रपाहि मां शङ्खगदास्त्रपाणे ॥३४॥ कृतं त्वया देव सुरासुराणां सङ्कीर्त्यमानेन अनन्तमूर्त्ते ॥ सृष्ट्यर्थ
मेतत्तव देव विष्णो संचेष्टितं कूटगतस्य तत्स्यात् ॥ ३५ ॥ तथापि कूर्मत्वमृगत्वमुच्चैस्त्वया कृतं रूपमनेकरूप ॥ सर्वज्ञभावादसकृच्च
जन्म सङ्कीर्त्यते तेऽच्युत नैतदस्ति ॥ ३६ ॥ नृसिंह वामन नमो जमदग्निनाम दशास्यगोत्रान्तक वासुदेव ॥ नमोऽस्तु ते बुद्ध कल्किन्वरेश ॥४९॥
शम्भो नमस्ते विबुधारिनाशन ॥ ३७ ॥ नमोऽस्तु नारायण पद्मनाभ नमो नमस्ते पुरुषोत्तमाय ॥ नमः समस्तामरसङ्घपूज्य नमोऽस्तु ते
सर्वविदां प्रधान ॥ ३८ ॥ नमः करालास्य नृसिंहमूर्त्ते नमो विशालाद्रिसमान कूर्म ॥ नमः समुद्रप्रतिमान मत्स्य नमामि त्वां क्रोडरूपि
न्ननन्त ॥३९॥ सृष्ट्यर्थमेतत्तव देव चेष्टितं न मुख्यपक्षे तव मूर्त्तिता विभो ॥ अजानता ध्यानमिदं प्रकाशितं न लक्ष्यसे त्वं पुरुषः पुराणः॥४०॥

भाद्यो मखस्त्वं स्वयमेव विष्णो मखाङ्गभूतोऽसि हविस्त्वमेव ॥ पशुर्भवान् ऋत्विगाज्यं त्वमेव त्वां देवसङ्घा मुनयो यजन्ति ॥ ४१ ॥ चलाचलं जगदेतच्च यस्मिन् सुरादिकालानलसंस्थमुत्तमम् ॥ न त्वं विभक्तोऽसि जनार्दनेश प्रयच्छ सिद्धिं हृदयेप्सितां मे ॥ ४२ ॥ नमः कमलपत्राक्ष मूर्त्तामूर्त्त नमो हरे ॥ शरणं त्वां प्रपन्नोऽस्मि संसारान्मां समुद्धर ॥ ४३ ॥ एवं स्तुतस्ततो देवस्तेन राज्ञा महात्मना ॥ विशालाम्रतलस्थेन तुतोष परमेश्वरः ॥४४॥ कुब्जरूपस्ततो भूत्वा आजगाम हरिः स्वयम् ॥ तास्मिन्नागतमात्रे तु सोप्याम्रः कुब्जकोऽभवत् ॥४५॥ तद्दृष्ट्वा महदाश्चर्यं स राजा संशितव्रतः ॥ विशालस्य कथं कौब्जमिति चिन्तापरोऽभवत् ॥ ४६ ॥ तस्य चिन्तयतो बुद्धिर्जातेयं ब्रह्मसन्निधौ ॥ अनेनागतमात्रेण कृतमेतन्न संशयः ॥ ४७ ॥ एतस्मादेव भविता भगवान्पुरुषोत्तमः ॥ एवमुक्त्वा नमश्चक्रे तं विप्रं स नृपोत्तमः ॥ ४८ ॥ अनुग्रहाय भगवन्नूनं त्वं पुरुषोत्तमः ॥ आगतोऽसि स्वरूपं मे दर्शयस्वाधुना हरे ॥ ४९ ॥ एवमुक्तस्तदा देवः शङ्खचक्रगदाधरः ॥ बभौ तत्पुरतः सौम्यो वाक्यं चेदमुवाच ह ॥ ५० ॥ वरं वृणीष्व राजेन्द्र यत्ते मनसि वर्त्तते ॥ मयि प्रसन्ने त्रैलोक्यं तिलमात्रमिति प्रभो ॥ ५१ ॥ एवमुक्तस्ततो राजा हर्षोत्फुल्लितलोचनः ॥ मोक्षं प्रयच्छ देवेशेत्युक्त्वा नोवाच किंचन ॥५२॥ एवमुक्तः स भगवान् पुनर्वाक्यमुवाच ह ॥ मय्यागते विशालोऽयमाम्रः कुब्जत्वमागतः ॥ ५३ ॥ यस्मात्तस्मात्तीर्थमिदं कुब्जकाम्रं भविष्याति ॥ तिर्यग्योन्यादयोऽप्यास्मिन् ब्राह्मणा वा यदि स्वकम् ॥ ५४ ॥ कलेवरं त्यजिष्यन्ति तेषां पंचशतानि च ॥ विमानानि भविष्यन्ति योगिनो मुक्तिरेव च ॥ ५५ ॥ एवमुक्त्वा नृपं देवः शङ्खाग्रेण जनार्दनः ॥ स्पृश्य संस्पृष्टमात्रोऽसौ पर निर्वाणमाप्तवान् ॥५६ ॥ तस्मात्त्वमपि राजेन्द्र तं देव शरणं व्रज ॥ येन भूयः पुनः शोच्यपदवीं नो प्रयास्यसि ॥५७॥ य इदं शृणुयान्नित्यं प्रातरुत्थाय मानवः ॥ पठेद्यश्चरितं ताभ्यां मोक्षधर्मार्थदो भवेत् ॥५८॥ शुभव्रतमिदं पुण्यं यश्च कुर्याज्जनेश्वर ॥ स सर्वसम्पदं चेह भुक्त्वान्ते तत्क्षयं व्रजेत् ॥ ५९ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु शुभव्रतं नाम पंचपंचाशोऽध्यायः ॥ ५५ ॥ अथ धन्यव्रतम् ॥ अगस्त्य उवाच ॥ अतः परं प्रवक्ष्यामि धन्यव्रतमनुत्तमम् ॥ येन सद्यो भवेद्धन्यस्त्वधनोऽपि हि यो भवेत् ॥ १ ॥ मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् ॥ तस्यां नक्तं प्रकुर्वीत विष्णुमग्निं प्रपूजयेत् ॥२॥ वैश्वानराय

पादौ तु अग्नयेत्युदरं तथा ॥ हविर्भुजाय च उरो द्रविणोदेति वै भुजौ ॥ ३ ॥ संवर्त्तायेति च शिरो ज्वलनायेति सर्वतः ॥ अभ्यर्च्यैवं विधा
नेन देवदेवं जनार्दनम् ॥ ४ ॥ तस्यैव पुरतः कुण्डं कारयित्वा विधानतः ॥ होमं तत्र प्रकुर्वीत एभिर्मन्त्रैर्विचक्षणः ॥ ५ ॥ ततः सयावकं
चान्नं भुञ्जीयाद्घृतसंयुतम् ॥ कृष्णपक्षेऽप्येवमेव चातुर्मास्यं तु यावता ॥ ६ ॥ चैत्रादिषु च भुञ्जीत पायसं सघृतं बुधः ॥ श्रावणादिषु सक्तूंश्च
ततश्चैतत्समाप्यते ॥ ७ ॥ समाप्ते तु व्रते वह्निं काञ्चनं कारयेद्बुधः ॥ रक्तवस्त्रयुगच्छन्नं रक्तपुष्पानुलेपनम् ॥ ८ ॥ कुङ्कुमेन तथालिप्य ब्राह्मणं
सत्त्वमेव च ॥ सर्वावयवसम्पूर्णं ब्राह्मणं प्रियदर्शनम् ॥ ९ ॥ पूजयित्वा विधानेन रक्तवस्त्रयुगेन च ॥ दद्यात्पश्चाच्च तं तस्य मन्त्रेणानेन बुद्धि
मान् ॥ १० ॥ धन्योऽस्मि धन्यकर्माऽस्मि धन्यचेष्टोऽस्मि धन्यवान् ॥ धन्येनानेन चीर्णेन व्रतेन स्यां सदा सुखी ॥ ११ ॥ एवमुच्चार्य तं
विप्रे न्यस्य कोशं महात्मने ॥ सद्यो धन्यत्वमाप्नोति योऽपि स्याद्रोगवर्जितः ॥ १२ ॥ इह जन्मनि सौभाग्यं धनं धान्यं च पुष्कलम् ॥ अनेन
कृतमात्रेण जायते नात्र संशयः ॥ १३ ॥ प्राग्जन्मजनितं यावदग्निर्दहति पातकम् ॥ दग्धे पापे विमुक्तात्मा इह जन्मन्यसौ भवेत् ॥ १४ ॥ योऽपीदं
शृणुयान्नित्यं यश्च भक्त्या पठेद्द्विजः ॥ उभौ ताविह लोके तु धन्यौ सद्यो भविष्यतः ॥ १५ ॥ श्रूयते च व्रतं चैतच्चीर्णमासन्महात्मना ॥
धनदेन पुरा कल्पे शूद्रयोनौ स्थितेन हि ॥ १६ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु धन्यव्रतं नाम षट्पंचाशोऽध्यायः ॥ ५६ ॥
अथ कान्तिव्रतम् ॥ अगस्त्य उवाच ॥ अतःपरं प्रवक्ष्यामि कान्तिव्रतमनुत्तमम् ॥ यत्कृत्वा तु पुरा सोमः कान्तिमानभवत्पुनः ॥ १ ॥
यक्ष्मणा दक्षशापेन पुराक्रान्तो निशाचरः ॥ एतत्कृत्वा व्रतं सद्यः कान्तिमानभवत्किल ॥ २ ॥ द्वितीयायां तु राजेन्द्र
कार्त्तिकस्य सितान्दिनम् ॥ नक्तं कुर्वीत यत्नेन त्वर्चयन्बलकेशवम् ॥ ३ ॥ बलदेवाय पादौ तु केशवाय शिरोऽर्चयेत् ॥
एवमभ्यर्च्य मेधावी वैष्णवं रूपमुत्तमम् ॥ ४ ॥ परं तु रूपं सोमाख्यं द्विकलं तद्दिने हि यत् ॥ तस्य देवस्य चार्घ्यं तु दद्यान्मन्त्रेण
सुव्रत ॥ ५ ॥ नमोऽस्त्वमृतरूपाय स वै विधिवराय च ॥ यज्ञलोकाधिपतये सोमाय परमात्मने ॥ ६ ॥ रात्रौ स विप्रो भुञ्जीत यवान्नं सघृतं
नरः ॥ फाल्गुनादिचतुष्कं तु पायसं भक्षयेच्छुचिः ॥ ७ ॥ शालिहोमं प्रकुर्वीत कार्त्तिके तु यवैस्तथा ॥ आषाढादिचतुष्के तु तिलहोमं तु

कारयेत् ॥ ८ ॥ तद्वत्तिलान्नं भुञ्जीत एष एव विधिः स्मृतः ॥ ततः संवत्सरे पूर्णे कांचनं शशिनं व्रती ॥ ९ ॥ सितवस्त्रयुगच्छन्नं सितपुष्पा
नुलेपनम् ॥ दद्याद्द्विजाय सम्पूज्य कांचनं शशिनं तथा ॥ १० ॥ अथ संवत्सरे पूर्णे कृत्वा सोमं तु राजतम् ॥ सितवस्त्रयुगच्छन्नं सितपुष्पा
नुलेपनम् ॥ ११ ॥ एवमेव द्विजं पूज्य ततस्तं प्रतिपादयेत् ॥ कान्तिमानपि लोकेऽस्मिन् सर्वज्ञः प्रियदर्शनः ॥ १२ ॥ त्वत्प्रसादात्सोम
रूपिन्नारायण नमोऽस्तु ते ॥ अनेन किल मन्त्रेण दत्त्वा विप्राय वाग्यतः ॥ १३ ॥ दत्तमात्रे ततस्तस्मिन्कान्तिमाञ्जायते नरः ॥ आत्रेये
णापि सोमेन कृतमेतत्पुरा नृप ॥ १४ ॥ तस्य व्रतान्ते सन्तुष्टः स्वयमेव जनार्दनः ॥ यक्ष्माणमपनीयाशु अमृताख्यां कलां ददौ ॥ १५ ॥
तां कलां सोमराजासौ तपसा लब्धवान्निशि ॥ सोमत्वं चागमत्सोमो द्विजराजत्वमेव च ॥ १६ ॥ द्वितीयामश्विनौ सोमभुजौ कीर्त्यौ तु
तद्दिने ॥ तौ शेषविष्णू विख्यातौ शुक्लपक्षौ न संशयः ॥ १७ ॥ न विष्णोर्व्यतिरिक्तः स्याद्दैवतं नृपसत्तम ॥ नामभेदेन सर्वत्र संस्थितः पुरु
षोत्तमः ॥ १८ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु कान्तिव्रतं नाम सप्तपञ्चाशोऽध्यायः ॥ ५७॥ अथ सौभाग्यव्रतम् ॥ अगस्त्य उवाच ॥
अतः परं महाराज सौभाग्यकरणं व्रतम् ॥ शृणु येनाशु सौभाग्यं स्त्रीपुंसोरुपजायते ॥ १ ॥ फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षगा ॥
उपासितव्या नक्तेन शुचिना सत्यवादिना ॥ २ ॥ सस्त्रीकं च हरिं पूज्य रुद्रं वा चोमया सह ॥ या श्रीः सा गिरिजा प्रोक्ता यो हरिः स त्रिलो
चनः ॥ ३ ॥ एवं सर्वेषु शास्त्रेषु पुराणेषु च गद्यते ॥ एतस्मादन्यथा यस्तु ब्रूते शास्त्रं पृथक्तया ॥ ४ ॥ रुद्रो जनानां मर्त्यानां काव्यं शास्त्रं
न तद्भवेत् ॥ विष्णुं रुद्रकृतं ब्रूयाच्छ्रीगौरीति निगद्यते ॥ ५ ॥ एतयोरन्तरं यच्च सोऽधमेत्युच्यते जनैः ॥ तं नास्तिकं विजानीयात्सर्वधर्म
बहिष्कृतम् ॥ ६ ॥ एवं ज्ञात्वा सलक्ष्मीकं हरिं सम्पूज्य यत्नतः ॥ मन्त्रेणानेन राजेन्द्र ततस्तं परमेश्वरम् ॥ ७ ॥ गम्भीरायेति पादौ तु सुभ
गायेति वै कटिम् ॥ उदरं देवदेवाय त्रिनेत्रायेति वै मुखम् ॥ ८ ॥ शिरश्च वाचस्पतये रुद्रायेति च सर्वतः ॥ एवमभ्यर्च्य मेधावी विष्णुं
लक्ष्म्या समन्वितम् ॥ ९ ॥ हरं च गौरीसंयुक्तं गन्धपुष्पादिभिः क्रमात् ॥ ततस्तस्याग्रतो होमं कारयेन्मधुसर्पिषा ॥ १० ॥ तिलैः सह
महाराज सौभाग्यपतये परम् ॥ ततस्त्वक्षारविरसं निःस्नेहं धरणीतले ॥ ११ ॥ गोधूमान्नं तु भुञ्जीत कृष्णेऽप्येवं विधिः स्मृतः ॥ आषाढादि

श्यामाकं तत्र भुञ्जीत त्रीन्मासान्नियतः शुचिः ॥१३॥ पुराण-
द्वितीया तु पारणं तत्र कल्पयेत् ॥१२॥ यवान्नेन ततः पश्चात्कार्त्तिकादिषु पार्थिव ॥ सलक्ष्मीकं हरिं वापि यथाशक्ति प्रसन्नधीः ॥ अ०६०
वराह- ततो माघासिते पक्षे तृतीयायां नराधिप ॥ सौवर्णं कारयेद्गौरीं रुद्रं चैकत्र बुद्धिमान् ॥ १४ ॥ सदाचारेऽथ वा दद्याद्विष्णुभक्ते विशेषतः ॥१६॥
॥६१॥ ततस्तान्ब्राह्मणे दद्यात्पात्रभूते विचक्षणे ॥१५॥ अन्नेन हीने वेदानां पारगे साधुवर्त्तिनि ॥ तृतीयं तिलतैलस्य चतुर्थं गुडसंयुतम् ॥ पंचमं
षड्भिः पात्रैरुपेतं तु ब्राह्मणाय निवेदयेत् ॥ एकं मधुमयं पात्रं द्वितीयं घृतपूरितम् ॥१७॥ सुभगो दर्शनीयश्च नारी वा पुरुषोऽपि वा ॥१९॥
लवणैः पूर्णं षष्ठं गोक्षीरसंयुतम् ॥ १८ ॥ एतान दत्त्वा पात्राणि सप्त जन्मान्तरे भवेत् ॥ अथ विघ्नहरं राजन्
इति श्रीवराहपुराणेऽगस्त्यगीतासु सौभाग्यव्रतं नामाष्टपञ्चाशोऽध्यायः ॥५८॥ अथाऽविघ्नव्रतम् ॥ अगस्त्य उवाच ॥ नक्ताहारेण राजेन्द्र
कथयामि शृणुष्व मे ॥ सम्यक्कृतेन येनाशु न विघ्नैः परिभूयते ॥ १ ॥ चतुर्थ्यां फाल्गुने मासि ग्रहीतव्यं व्रतं त्विदम् ॥ विप्राय दद्यात्
तिलान्नं पारणं स्मृतम् ॥ २॥ तदेवाग्नौ तु होतव्यं ब्राह्मणाय च तद्भवेत् ॥ चातुर्मास्यं व्रतं चैतत्कृत्वा वै पञ्चमे तथा ॥३॥ हयमेधस्य विघ्ने तु
सौवर्णं गजवक्त्रं सुपूजितम् ॥ पायसैः पञ्चभिः पात्रैरुपेतं तु तिलैस्तथा ॥ ४ ॥ एवं कृत्वा व्रतं चैतत्सर्वविघ्नैर्विमुच्यते ॥ एतदेव कृतं तस्मात्रि
सञ्जाते सगरस्तथा ॥ ५ ॥ एतदेव चरित्वा तु हयमेधं स आप्तवान् ॥ तथा रुद्रेण देवेन त्रिपुरं निघ्नता पुरा ॥ ६ ॥ तपोऽर्थिभिर्ज्ञानकृद्भिरविघ्नार्थं पर
पुरस्तेन पातितः ॥ मया समुद्रं पिबता एतदेव कृतं व्रतम् ॥ ७ ॥ अन्यैरपि महीपालैरेतदेव कृतं पुरा ॥ एवं सम्पूज्य तद्दिने पुण्यकृद्भिर्होमं कुर्याद्विघ्नानाशस्य
न्तप ॥ ८ ॥ शूराय धीराय गजाननाय लम्बोदरायैकदंष्ट्राय चैव ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु
हेतोः ॥ ९ ॥ अनेन कृतमात्रेण सर्वविघ्नैः प्रमुच्यते ॥ विनायकस्य दानेन कृतकृत्यो नरो भवेत् ॥१०॥ शान्तिव्रतं प्रवक्ष्यामि तव राजन् शृणुष्व तत् ॥ ॥६१॥
अविघ्नव्रतं नामोनषष्टितमोऽध्यायः ॥ ५९ ॥ अथ शान्तिव्रतम् ॥ अगस्त्य उवाच ॥ आरंभे वर्षमेकं तु भुञ्जीयादुष्णवर्जि
येन चीर्णेन शान्तिः स्यात्सर्वदा गृहमेधिनाम् ॥ १ ॥ पञ्चम्यां शुक्लपक्षस्य कार्त्तिके मासि सुव्रत ॥ तक्षयकायेति जठरमुरः
तम् ॥ २ ॥ नक्ते देवं तु सम्पूज्य हरिं शेषोपरि स्थितम् ॥ अनन्तायेति पादौ तु कटिं वासुकिने नमः ॥ ३ ॥

कर्कोटकाय च ॥ पद्माय कण्ठं सम्पूज्य महापद्माय दोर्युगम् ॥ ४ ॥ शङ्खपालाय वक्त्रं तु कुटिलायेति वै शिरः ॥ एवं विष्णुगतं पूज्य
पृथगेव च पूजयेत् ॥ ५ ॥ क्षीरेण स्नपनं कुर्यात्तानुद्दिश्य हरेः पुनः ॥ तदग्रे होमयेत् क्षीरं तिलैः सह विचक्षणः ॥ ६ ॥ एवं
संवत्सरस्यान्ते ब्राह्मणान् भोजयेत्ततः ॥ नागं तु कांचनं कुर्याद्ब्राह्मणाय निवेदयेत् ॥ ७ ॥ एवं यः कुरुते भक्त्या व्रतमेतन्नराधिपः ॥
तस्य शान्तिर्भवेन्नूनं नागेभ्यो न भयं तथा ॥ ८ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु शान्तिव्रतं नाम षष्टितमोऽध्यायः ॥ ६० ॥
अथ कामव्रतम् ॥ अगस्त्य उवाच ॥ कामव्रतं महाराज शृणु मे गदतोऽधुना ॥ येन कामाः समृद्ध्यन्ते मनसा चिन्तिता अपि ॥ १ ॥
षष्ठ्यां फलाशनो यस्तु वर्षमेकं व्रतं चरेत् ॥ पौषमासे सिते पक्षे पंचम्यां कृतभोजनः ॥ २ ॥ षष्ठ्यां तु प्राशयेद्धीमान्प्रथमं तु फलं नृप ॥
ततो भुञ्जीत यत्नेन वाग्यतः शुद्धमोदनम् ॥ ३ ॥ ब्राह्मणैः सह राजेन्द्र अथवा केवलैः फलैः ॥ तमेकं दिवसं स्थित्वा सप्तम्यां पारये
न्नृप ॥ ४ ॥ अग्निकार्यं तु कुर्वीत गुहरूपेण केशवम् ॥ पूजयित्वा विधानेन वर्षमेकं व्रतं चरेत् ॥ ५ ॥ षड्वक्त्रः कार्त्तिकेयश्च सेनानीः
कृत्तिकासुतः ॥ कुमारः स्कन्द इत्येवं पूज्यो विष्णुः स्वनामभिः ॥ ६ ॥ समाप्ते तु व्रतस्यास्य कुर्याद्ब्राह्मणभोजनम् ॥ षण्मुखं मूर्त्तसौवर्णं
ब्राह्मणाय निवेदयेत् ॥ ७ ॥ सर्वे कामाः समृद्ध्यन्तां मम देव कुमारक ॥ त्वत्प्रसादादिमं भक्त्या गृह्यतां विप्र मा चिरम् ॥ ८ ॥ अनेन
दत्तमात्रेण ब्राह्मणाय सवस्त्रकम् ॥ ततः कामाः समृद्ध्यन्ते सर्वे वै इह जन्मनि ॥ ९ ॥ अपुत्रो लभते पुत्रं धानार्थी लभते धनम् ॥ भ्रष्ट
राज्यो लभेद्राज्यं नात्र कार्या विचारणा ॥ १० ॥ एतद्व्रतं पुरा चीर्णं नलेन नृपसत्तम ॥ ऋतुपर्णस्य विषये वसता व्रतचर्यया ॥ ११ ॥
तथा राज्यच्युतैरन्यैर्बहुभिर्नृपसत्तमैः ॥ पौराणिकैर्व्रतं चैव सिद्ध्यर्थं नृपसत्तम ॥ १२ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु कामव्रतं नाम
एकषष्टितमोऽध्यायः ॥ ६१ ॥ अथाऽऽरोग्यव्रतम् ॥ अगस्त्य उवाच ॥ अथापरं महाराज व्रतमारोग्यसंज्ञितम् ॥ कथयामि परं पुण्यं सर्व
पापप्रणाशनम् ॥ १ ॥ आदित्य भास्कर रवे भानो सूर्य दिवाकर ॥ प्रभाकरेति सम्पूज्य एवं व्रतमुपाचरेत् ॥ २ ॥ षष्ठ्यां चैव कृताहारः
सप्तम्यां भानुमर्चयेत् ॥ अष्टम्यां चैव भुञ्जीत एष एव विधिक्रमः ॥ ३ ॥ अनेन वत्सरं पूर्णं विधिना योऽर्चयेद्रविम् ॥ तस्यारोग्यं धनं

धान्यामिह जन्मनि जायते ॥ ४ ॥ परत्र च शुभं स्थानं यद्गत्वा न निवर्त्तते ॥ सार्वभौमः पुरा राजा अनरण्यो महाबलः ॥ ५ ॥ तेनाय
मर्चितो देवो व्रतेनानेन पार्थिव ॥ यस्य तुष्टोऽभवद्देवः प्रादादारोग्यमुत्तमम् ॥ ६ ॥ भद्राश्व उवाच ॥ किमसौ रोगवान्राजा येनारोग्यमवाप्त
वान् ॥ सार्वभौमस्य च कथं ब्रह्मन्रोगस्य सम्भवः ॥ ७ ॥ अगस्त्य उवाच ॥ स राजा सार्वभौमोऽभूद्यशस्वी च सुरूपवान् ॥ स कदाचि
न्महाराज नृपश्रेष्ठो महाबलः ॥ ८ ॥ गतवान्मानसं दिव्यं सरो देवगणान्वितम् ॥ तत्रापश्यद्बृहत्पद्मं सरोमध्यगतं सितम् ॥ ९ ॥ तत्र
चाङ्गुष्ठमात्रं तु स्थितं पुरुषसत्तमम् ॥ रक्तवासोभिराच्छन्नं द्विभुजं तिग्मतेजसम् ॥ १० ॥ तं दृष्ट्वा सारथिं प्राह पद्ममेतन्ममानय ॥ इदं तु
शिरसा बिभ्रत्सर्वलोकस्य सन्निधौ ॥ ११ ॥ श्लाघनीयो भविष्यामि तस्मादानय मा चिरम् ॥ एवमुक्तस्तदा तेन सारथिः प्रविवेश ह ॥ १२॥
गृहीतुमुपचक्राम तत्पद्मं नृपसत्तम ॥ स्पृष्टमात्रे ततः पद्मे हुङ्कारः समजायत ॥ १३ ॥ तेन शब्देन वित्रस्ताः स पपात ममार च ॥
राजा च तत्क्षणादेव शब्देन समपद्यत ॥ १४ ॥ कुष्ठी विगतवर्णश्च बलवीर्यविवर्जितः ॥ तथागतमथात्मानं दृष्ट्वा स पुरुषर्षभः ॥ १५ ॥
तस्थौ तत्रैव शोकार्त्तः किमेतदिति चिन्तयन् ॥ तस्य चिन्तयतो धीमानाजगाम महातपाः ॥ १६ ॥ वसिष्ठो ब्रह्मपुत्रोऽथ स तं पप्रच्छ
पार्थिवम् ॥ कथं ते राजशार्दूल चेह देहस्य शासनम् ॥ १७ ॥ इदानीं मे च किं कार्यं तन्ममाचक्ष्व पृच्छतः ॥ एवमुक्तस्ततो राजा वसि
ष्ठेन महात्मना ॥ १८ ॥ सर्वं पद्मस्य वृत्तान्तं कथयामास च प्रभुः ॥ तं श्रुत्वा स मुनिस्तत्र साधु राजन्तथाब्रवीत् ॥ १९ ॥ असाधुरथ
चातिष्ठस्तस्मात्कुष्ठित्वमागतः ॥ एवमुक्तस्तदा राजा वेपमानः कृताञ्जलिः ॥ २० ॥ पप्रच्छ साध्वहं विप्र कथं वासाध्वहं मुने ॥ कुष्ठं कथं
मे सञ्जातमेतन्मे वक्तुमर्हसि ॥ २१ ॥ वसिष्ठ उवाच ॥ एतद्ब्रह्मोद्भवं नाम पद्मं त्रैलोक्यविश्रुतम् ॥ दृष्टमात्रेण चानेन हृष्टाः स्युः सर्वं
देवताः ॥ २२ ॥ एतस्मिन्दृश्यते चैतत् षण्मासं क्वापि पार्थिव ॥ एतस्मिन्दृष्टमात्रे तु यो जलं विशते नरः ॥ २३ ॥ सर्वपापविनिर्मुक्तः परं
निर्वाणमर्हति ॥ ब्रह्मणः प्रागवस्थायां मूर्त्तिरप्सु व्यवस्थिता ॥ २४ ॥ एतां दृष्ट्वा जले मग्नः संसाराद्धि प्रमुच्यते ॥ इमं च दृष्ट्वा ते सूतो
जले मग्नो नरोत्तम ॥ २५ ॥ प्रविष्टोयं पुनरिमं हन्तुमिच्छन्नराधिप ॥ प्राप्तवानसि दुर्बुद्धे कुष्ठित्वं पापपूरुष ॥ २६ ॥ दृष्टमेतत्त्वया यस्मात्त्वं

साध्विति ततः प्रभो ॥ मयोक्तो मोहमापन्नस्तेनासाधुरितीरितः ॥ २७ ॥ ब्रह्मपुत्रो वदन्नेवं नृपादन्तर्हितोऽभवत् ॥ स तद्वचनमाकर्ण्य राजापि
परमेश्वरम् ॥ २८ ॥ अहन्यहनि चागच्छत्तं पुनर्दृष्टवानपि ॥ देवा अपि वदन्त्येते पद्मं काञ्चनमुत्तमम् ॥ २९ ॥ मानसे ब्रह्मपद्मं तु दृष्ट्वा
चात्रगतं हरिम् ॥ प्राप्स्यामस्तत्परं ब्रह्म यद्गत्वा न पुनर्भवेत् ॥३०॥ इदं च कारणं चान्यत्कुष्ठस्य शृणु पार्थिव ॥ आदित्यः पद्मगर्भोऽस्मिन्
स्वयमेव व्यवस्थितः ॥ ३१ ॥ तं दृष्ट्वा तत्त्वतो भावः परमात्मैष शाश्वतः ॥ धारयामि शिरस्येनं ततः ख्यातिर्भविष्यति ॥ ३२ ॥
इतीमं भावमास्थाय सुतोऽयं प्रेषितस्त्वया ॥ तत्क्षणादेव स मृतः त्वं च कुष्ठित्वमागतः ॥ ३३ ॥ तस्मात्त्वमपि राजेन्द्र व्रतमेतत्समाचर ॥
व्रतस्यास्य प्रभावेण कुष्ठरोगात्प्रमुच्यसे ॥ ३४ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतास्वारोग्यव्रतं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ अथ
पुत्रप्राप्तिव्रतम् ॥ अगस्त्य उवाच ॥ अथापरं महाराज पुत्रप्राप्तिव्रतं शुभम् ॥ कथयामि समासेन तन्मे निगदतः शृणु ॥ १ ॥ मासे भाद्र
पदे या तु कृष्णपक्षे नरेश्वर ॥ अष्टम्यामुपवासेन पुत्रप्राप्तिव्रतं हि तत् ॥ २ ॥ सप्तम्यां चैव सङ्कल्प्य अष्टम्यामर्चयेद्धरिम् ॥ देवकयुत्सङ्गगं
विष्णुं मातृभिः परिवेष्टितम् ॥ ३ ॥ प्रभाते विमलेऽष्टम्यामर्चयेत्प्रयतो हरिम् ॥ प्राग्विधानेन गोविन्दमर्चयित्वा विधानतः ॥ ४ ॥ ततो
यवैः कृष्णतिलैः सघृतैर्होमयेद्बुधः ॥ ब्राह्मणान्भोजयेद्भक्त्या यथाशक्त्या सदक्षिणम् ॥ ५ ॥ ततः स्वयं तु भुञ्जीत प्रथमं बिल्वमुत्तमम् ॥
पश्चाद्यथेष्टं भुञ्जीत स्नेहैः सर्वरसैर्युतम् ॥ ६ ॥ प्रतिमासमनेनैव विधिनोपोष्य मानवः ॥ कृष्णाष्टम्यां व्रतं कृत्वा अपुत्रः पुत्रवान्भवेत् ॥ ७ ॥
श्रूयते च पुरा राजा शूरसेनः प्रतापवान् ॥ अपुत्रः स तपस्तेपे पर्वते च हिमालये ॥ ८ ॥ तस्यैवं कुर्वतो देवो व्रतमेतज्जगाद ह ॥
सोऽप्येतत्कृतवान्राजा पुत्रं चैवोपलब्धवान् ॥ ९ ॥ वसुदेवं महाभागमनेकव्रतयाजिनम् ॥ तं लब्ध्वा सोऽपि राजर्षिः परं निर्वाणमाप्तवान् ॥ १० ॥
एवं कृष्णाष्टमी राजन्मया ते परिकीर्त्तिता ॥ संवत्सरान्ते दातव्यं गोयुग्मं तु द्विजातये ॥ ११ ॥ एतत्पुत्रव्रतं नाम मया ते परिकीर्त्तितम् ॥
एतत्कृत्वा नरः पापैः सर्वैरेव प्रमुच्यते ॥ १२ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु पुत्रप्राप्तिव्रतं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ अथ शौर्य
व्रतम् ॥ अगस्त्य उवाच ॥ अथापरं प्रवक्ष्यामि शौर्यव्रतमनुत्तमम् ॥ येन भीरोरपि महच्छौर्यं भवति तत्क्षणात् ॥ १ ॥ मासि चाश्वयुजे शुद्ध-

नवमीं समुपोषयेत् ॥ सप्तम्यां कृतसङ्कल्पः स्थित्वाष्टम्यां निरोदनः ॥ नवम्यां प्राशयेत्पिष्टं प्रथमं भक्तितो नृप ॥ २ ॥ ब्राह्मणान्भोजये
द्भक्त्या देवीं चैव तु पूजयेत्॥दुर्गां देवीं महाभागां महमायां महाप्रभाम्॥ ३॥ एवं संवत्सरं यावदुपोष्येतिविधानतः ॥व्रतान्ते भोजयेद्धीमान्यथा
शक्त्या कुमारिकाः ॥४॥ हेमवस्त्रादिभिस्तास्तु भूषयित्वा तु शक्तितः ॥ पश्चात्क्षमापयेत्तां तु देवी मे प्रीयतामिति॥५॥ एवं कृते भ्रष्टराज्यो
लभेद्राज्यं न संशयः ॥ अविद्यो लभते विद्यां भीतः शौर्यं च विन्दति ॥ ६ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु शौर्यव्रतं नाम चतुःषष्टित
मोऽध्यायः ॥ ६४ ॥ अथ सार्वभौमव्रतम् ॥ अगस्त्य उवाच ॥ सार्वभौमव्रतं चान्यत्कथयामि समासतः ॥ येन सम्यक्कृतेनाशु सार्वभौमो
नृपो भवेत् ॥ १॥ कार्त्तिकस्य तु मासस्य दशमी शुक्लपक्षगा ॥ तस्यां नक्ताशनो भूत्वा दिक्षु शुद्धबलिं हरेत् ॥२॥ विचित्रैः कुसुमैर्भक्त्या
पूजयित्वा द्विजोत्तमान् ॥ दिशां तु प्रार्थनां कुर्यान्मन्त्रेणानेन सुव्रतः ॥ ३ ॥ सर्वा भवत्यः सिध्यन्तु मम जन्मनि जन्मनि ॥ एवमुक्त्वा बलिं
ताभ्यो दत्त्वा शुद्धेन चेतसा ॥४ ॥ ततो रात्रौ स भुञ्जीत दध्यन्नं तु सुसंस्कृतम् ॥ पूर्वं पश्चाद्यथेष्टं तु एवं संवत्सरं नृप ॥ ५ ॥ यः करोति
नरो नित्यं तस्य दिग्विजयो भवेत् ॥ एकादश्यां निराहारो नरः कुर्याद्यथाविधि ॥६॥ मार्गशीर्षे शुक्लपक्षादारभ्याब्दं विचक्षणः ॥ तद्व्रतं धन
दस्येष्टं कृत वित्तं प्रयच्छति ॥ ७ ॥ एकादश्यां निराहारो यो भुंक्ते द्वादशीदिने ॥ शुक्ले वाप्यथवा कृष्णे तद्व्रतं वैष्णवं महत् ॥ ८ ॥ एवं
चीर्णं सुघोराणि हन्ति पापानि पार्थिव ॥ त्रयोदश्यां तु नक्तेन धर्मव्रतमथोच्यते ॥ ९ ॥ शुक्लपक्षे फाल्गुनस्य तथारभ्य विचक्षणः ॥ रौद्रव्रतं
चतुर्दश्यां कृष्णपक्षे विशेषतः ॥ १०॥ माघमासात्तथारभ्य पूर्णं संवत्सरं नृप ॥ इदं व्रतं तु पञ्चम्यां शुद्धायां नक्तभोजनम् ॥ पितृव्रतममायां
स्यादिति राजन् तथेरितम् ॥११॥दश पञ्च च वर्षाणि य एवं कुरुते नृप ॥ तिथिव्रतादिकं तस्य फलं स्यात्तत्प्रमाणतः ॥ १२॥ अश्वमेध
सहस्राणि राजसूयशतानि च ॥ इष्टानि तेन राजेन्द्र कल्पोक्तव्रतकारिणा॥१३॥ एकमेव कृतं हन्ति व्रतं पापानि नित्यशः ॥१४॥ यः पुनः
सर्वमेतद्धि कुर्यान्नरवरात्मजः ॥ स शुद्धो विरजाँल्लोकानाप्नोति सकलान्नृप ॥ १५ ॥ इति श्रीवराहपुराणेऽगस्त्यगीतासु सार्वभौमव्रतं नाम
पञ्चषष्टितमोऽध्यायः ॥६५॥ अथ नारदपुराणार्थपांचरात्रम् ॥ भद्राश्व उवाच ॥ आश्चर्यं यदि ते किंचिद्विदितं दृष्टमेव च ॥ तन्मे कथय

धर्मज्ञ परं कौतूहलं महत्॥ १ ॥ अगस्त्य उवाच ॥ आश्चर्यरूपो भगवानेष एव जनार्दनः ॥ तस्याश्चर्याणि दृष्टानि बहूनि विविधानि वै ॥२॥
श्वेतद्वीपगतः पूर्वं नारदः किल पार्थिव ॥ सोऽपश्यच्छंखचक्राब्जान्पुरुषांस्तिग्मतेजसः॥ ३॥ अयं विष्णुरयं विष्णुरेष विष्णुः सनातनः ॥ चिन्ताऽ
भूत्तस्य तान्दृष्ट्वा कोऽस्मिन्विष्णुरिति प्रभुः ॥ ४ ॥ एवं चिन्तयतस्तस्य चिन्ता कृष्णं प्रति प्रभो ॥ आराधयामि च कथं शंखचक्रगदा
धरम् ॥५॥ येन वेद्मि परं देवं कृष्णं नारायणं प्रभुम् ॥ एवं सञ्चिन्त्य दध्यौ स तं देवं परमेश्वरम् ॥६॥दिव्यं वर्षसहस्रं तु साग्रं ब्रह्मसुतस्तदा॥
ध्यातस्तस्य स देवोऽसौ परितोषं जगाम ह ॥ ७॥ उवाच स प्रसन्नात्मा प्रत्यक्षत्वं गतः प्रभुः ॥ वरं ब्रह्मसुत ब्रूहि किं ते दद्मि महामुने ॥८॥
नारद उवाच ॥ सहस्रमेकं वर्षाणां ध्यातस्त्वं भुवनेश्वर ॥ त्वत्प्रातिर्येन तद्ब्रूहि यदि तुष्टोऽसि मेऽच्युत ॥ ९ ॥ देवदेव उवाच ॥ पौरुषं
सूक्तमास्थाय ये यजन्ति द्विजाशु माम् ॥ ते मां प्राप्स्यन्ति सततं संहिताध्ययनेन च ॥ १० ॥ अशुभे वेदशास्त्राणां पञ्चरात्रोदितेन हि ॥
मार्गेण मां यजन्ते ये ते मां प्राप्स्यन्ति मानवाः ॥११॥ ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ॥ शूद्रादीनां तु मे क्षेत्रपदवीगमनं द्विज ॥१२॥
मन्नाम विहितं तेषां नान्यत्पूजादिकं चरेत् ॥ एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनम् ॥ १३ ॥ पञ्चरात्रं सहस्राणां यदि कश्चिद्ग्रहीष्यति ॥
कर्मक्षये च मां कश्चिद्यदि भक्तो भविष्यति॥१४॥तस्य चेदं पञ्चरात्रं नित्यं हृदि वसिष्यति ॥ इतरे राजसैर्भावैस्तामसैश्च समावृताः ॥ १५॥
भविष्यन्ति द्विजश्रेष्ठ मय्याशनपराङ्मुखाः ॥ कृतं त्रेतां द्वापरं च युगानि त्रीणि नारद ॥ १६ ॥ सत्त्वस्था मां समेष्यन्ति कलौ रजस्त
मोऽधिकाः ॥ अन्यच्च ते वरं दद्मि शृणु नारद साम्प्रतम् ॥ १७॥ यदिदं पञ्चरात्रं मे शास्त्रं परमदुर्लभम् ॥ तद्भवान्वेत्स्यते सर्वं मत्प्रसादा
न्न संशयः ॥ १८ ॥ वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ॥ प्राप्योऽहं नान्यथा वत्स वर्षकोट्ययुतैरपि ॥ १९ ॥ एवमुक्त्वा स भगवा
न्नारदं परमेश्वरः ॥ जगामादर्शनं सद्यो नारदोऽपि दिवं ययौ ॥ २० ॥ इति श्रीवराहपुराणे अगस्त्यगीतासु नारदपुराणार्थसूचनं नाम षट्
षष्टितमोऽध्यायः ॥ ६६ ॥ अथ विष्ण्वाश्चर्यम् ॥ भद्राश्व उवाच ॥ भगवन्सितकृष्णे द्वे ये ते जगति सत्तम ॥ स्त्रियौ बभूवतुः के द्वे सिता
कृष्णा च का शुभा ॥ १ ॥ कश्चासौ पुरुषो ब्रह्मन्पावकः सततोऽभवत् ॥ कोऽसौ द्वादशधा विप्र द्विदेहः षट्शिराः प्रभुः ॥२॥ दाम्पत्यं च

द्विजश्रेष्ठ कृतसूर्योदयादलम् ॥ कस्मादेतज्जगदिदं विततं द्विजसत्तम ॥३॥ अगस्त्य उवाच ॥ सितकृष्णे स्त्रियौ ये हि ते भगिन्यौ प्रकीर्तिते ॥
सितासिता द्विवर्णा च नारी रात्रिरुदाहृता ॥४॥ यः पुमान् सप्तधा जात एकीभूत्वा नरेश्वर ॥ स समुद्रस्तु विज्ञेयः सप्त चैको व्यवस्थितः ॥५॥
योऽसौ द्वादशधा राजन्द्विदेहः षट्शिराः प्रभुः॥ संवत्सरः स विज्ञेयः शरीरे द्वे गती स्मृते ॥६॥ ऋतवः षट् च वक्त्राणि एष संवत्सरः स्मृतः ॥
दाम्पत्यं तदहोरात्रं सूर्याचन्द्रमसौ यतः ॥ ७॥ ततो जगत्समुत्तस्थौ देवादस्माच्च सत्तम ॥ स विष्णुः परमो देवो विज्ञेयो नृपसत्तम ॥८ ॥ नच
वेदक्रियाहीनः पश्यते परमेश्वरम् ॥ ९ ॥ इति श्रीवराहपुराणे अगस्त्यगीतासु विष्ण्वाश्चर्यं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ अथ प्रागि
तिहासवर्णनम् ॥ भद्राश्व उवाच ॥ योऽसौ सर्वगतो देवः परमात्मा व्यवस्थितः ॥ चतुर्युगे त्वसौ कीदृग्विज्ञेयः परमेश्वरः ॥ १ ॥ युगे युगे क
आचारो वर्णानां भविता मुने ॥ कथञ्च शुद्धिर्विप्राणामन्यस्त्रीसङ्करे मुने ॥ २ ॥ अगस्त्य उवाच ॥ कृते युगे महीदेवैर्युज्यते वेदकर्मणा ॥
यजद्भिश्च सुरांस्त्रेता तद्वद्देवैश्च सत्तम ॥ ३ ॥ द्वापरे सत्त्वरजसा बहुले नृपसत्तम ॥ यावद्धर्मसुतो राजा भविष्यति महामते ॥४॥ ततस्तमः
प्रभविता कलिरूपो नरेश्वर ॥ तस्मिन् कलौ वर्तमाने स्वमार्गाच्च्याविता द्विजाः ॥ ५ ॥ राजानो वैश्यशूद्राश्च प्रायशो हीनजातयः ॥ भवि
ष्यन्ति नृपश्रेष्ठ सत्यशौचविवर्जिताः ॥ ६ ॥ ततो विनश्यते लोको वर्णधर्मश्च नश्यति ॥ भद्राश्व उवाच ॥ अगम्यागमनं कृत्वा ब्राह्मणः
क्षत्रियोऽपि वा ॥ ७ ॥ शूद्रोऽपि शुध्यते केन किं वागम्यं तु शस्यते ॥ अगस्त्य उवाच ॥ चतुर्गामी भवेद्विप्रस्त्रिगामी क्षत्रियः स्मृतः ॥ ८ ॥
द्विगामी तु भवेद्वैश्यः शूद्र एकगमः स्मृतः ॥ अगम्या ब्राह्मणी प्राहुः क्षत्रियस्य नरेश्वरः ॥ ९ ॥ क्षत्रिया चापि वैश्यस्य शूद्रस्य स्वा च
पार्थिव ॥ अधमस्योत्तमा नारी त्वगम्या मनुरब्रवीत् ॥ १० ॥ माता मातृष्वसा श्वश्रूर्भ्रातृपत्नी च पार्थिव ॥ अधमस्योत्तमा नारी यत्नेन
परिवर्ज्यते ॥ ११ ॥ स्नुषां दुहितरं चैव मित्रपत्नीं च सर्वदा ॥ जाया स्वमातृजा चैव अगम्यास्ताः सुतास्त्रियः ॥१२॥ रजक्यादिषु चान्याश्च
स्त्रियोऽगम्याः प्रकीर्तिताः ॥ अगम्यागमनं चैतत्कृतं पापाय जायते ॥१३॥ वियोनिगमनादाशु ब्राह्मणाय भवत्यलम् ॥ शेषस्याशुद्धिरेषैवं
प्राणायामशतं भवेत् ॥ १४ ॥ बहुनापि हि कालेन यत्पापं समुपार्जितम् ॥ वर्णसङ्करसङ्गत्या ब्राह्मणेन नरर्षभ ॥ १५ ॥ दशप्रणवगायत्री

प्राणायामशतैस्त्रिभिः ॥ मुच्यते ब्रह्महत्यायाः किम्पुनः शेषपातकैः ॥ १६ ॥ अथवा पररूपं यो देवं ब्राह्मणपुङ्गवः ॥ वेत्ति ध्याना[illegible] पूजा
न स पापैर्हि लिप्यते ॥ १७ ॥ वेदाध्यायी पापशतैः कृतैरपि न लिप्यते ॥ स्मरन्विष्णुं पठन्वेदं ददन्दानं यजन्हरिम् ॥ १८ ॥ ब्राह्मणः शुद्ध
एवास्ते विरुद्धमपि तारयेत् ॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वया नृप ॥ १९ ॥ मन्वादिभिर्विस्तरशः कथितं यच्च पार्थिव ॥ समासत
स्तच्च मया कथितं नृपसत्तम ॥ २० ॥ इति श्रीवराहपुराणे प्रागितिहासेऽष्टषष्टितमोऽध्यायः ॥ ६८ ॥ अथ नारायणाश्चर्यवर्णनम् ॥ भद्राश्व
उवाच ॥ भगवंस्त्वच्छरीरे तु यद्वृत्तं द्विजसत्तम ॥ चिरजीवी भवांस्तन्मे वक्तुमर्हसि सत्तम ॥ १ ॥ अगस्त्य उवाच ॥ मच्छरीरमिदं
राजन् बहुकौतूहलान्वितम् ॥ अनेककल्पसंस्थायि वेदविद्याविशोधितम् ॥ २ ॥ अटन्नहं महीं सर्वां गतवानस्मि पार्थिव ॥ इलावृतं महावर्षं
मेरोः पार्श्वे व्यवस्थितम् ॥ ३ ॥ तत्र रम्यं सरो दृष्टं तस्य तीरे महाकुटी ॥ तत्रोपवासशिथिलं दृष्टवानस्मि तापसम् ॥ ४ ॥ अस्थिचर्मा
वशेषं तु चीरवल्कलधारिणम् ॥ तं दृष्ट्वाहं नृपश्रेष्ठ एष कस्तापसोत्तमः ॥ ५ ॥ विश्वस्य प्रतिपत्त्यर्थं मयोक्तः स द्विजोत्तमः ॥ ब्रह्मन्मे दीयतां
किंचिदागतोऽहं तवान्तिके ॥ ६ ॥ इति मां स मुनिः प्राह स्वागतं ते द्विजोत्तम ॥ स्थीयतां स्थीयतां ब्रह्मन्नातिथ्यं करवाणि ते ॥ ७ ॥ एतच्छ्रुत्वा
वचस्तस्य प्रविष्टोऽहं कुटीं तु ताम् ॥ तावत्पश्याम्यहं विप्रं ज्वलन्तमिव तेजसा ॥ ८ ॥ भूमौ स्थितं तु मां दृष्ट्वा हुङ्कारमकरोद्द्विजः ॥ तद्धु
ङ्काराच्च पातालं भित्त्वा पंच हि कन्यकाः ॥ ९ ॥ निर्ययुः कांचनं पीठमेका तासां तु गृह्य वै ॥ सा मां प्रादात्तदा कन्या सलिलं करसंस्थि
तम् ॥ १० ॥ गृहीत्वान्या तु मे पादौ क्षालितुं चोपचक्रमे ॥ अन्ये द्वे व्यजनं गृह्य मत्पक्षाभ्यां व्यवस्थिते ॥ ११ ॥ ततो हुङ्कारमकरोत्पुन
रेव महातपाः ॥ तच्छब्दानन्तरं हेमद्रोणीं योजनविस्तृताम् ॥ १२ ॥ गृह्याजगाम अकरोत्प्लावं सरसि पार्थिव ॥ तस्यां तु कन्याः शतशो
हेमकुम्भकराः शुभाः ॥ १३ ॥ आययुस्ता अथो दृष्ट्वा स मुनिः प्राह मां नृप ॥ स्नानार्थं कल्पितं ब्रह्मन्निदं ते सर्वमेव तु ॥ १४ ॥ द्रोणीं
प्रविश्य चैनां त्वं स्नातुमर्हसि सत्तम ॥ ततोऽहं तस्य वचनात्तस्यां द्रोण्यां नराधिप ॥ १५ ॥ विशामि तावत्सरसि सा द्रोणी प्रत्यमज्जत ॥
द्रोण्यां जले निमग्नोऽहं तमृषिं तच्च वै पुरम् ॥ १६ ॥ तावन्मेरुगिरेर्मूर्ध्नि पश्याम्यात्मानमात्मना ॥ समुद्रान् सप्त पश्यामि [illegible] कुलपर्वतान् ॥ १७ ॥

सप्तद्वीपवतीं पृथ्वीं दृष्टवानस्मि पार्थिव ॥ अद्यापि तं लोकवरं ध्यायंस्तिष्ठामि सुव्रत ॥ १८ ॥ कदा प्राप्स्येऽथ तं लोकमिति चिन्तापरोऽ
भवम् ॥ एवं ते कौतुकं राजन् कथितं परमेष्ठिनः ॥ यद्वृत्तं मम देहे तु किमन्यच्छ्रोतुमिच्छसि ॥ १९ ॥ इति श्रीवराहपुराणे नारायणाश्चर्य
कथनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ अथ कृतत्रेताद्वापरादिविषयाः ॥ भद्राश्व उवाच ॥ भगवन् किं कृतं लोके त्वया तमनुपश्यता ॥
व्रतं तपो वा धर्मो वा प्राप्त्यर्थं तस्य वै मुने ॥ १ ॥ अगस्त्य उवाच ॥ अनाराध्य हरिं भक्त्या न लोकान् कामयेद्बुधः ॥ आराधिते हरौ लोकाः
सर्वे करतलेऽभवन् ॥ २ ॥ एवं संचिन्त्य राजेन्द्र मया विष्णुः सनातनः ॥ आराधितो वर्षशतं क्रतुभिर्भूरिदक्षिणैः ॥ ३ ॥ ततः कदाचि
द्बहुना कालेन नृपनन्दन ॥ यजतो मम देवेशं यज्ञमूर्त्तिं जनार्दनम् ॥ ४ ॥ आहूता आगता देवाः सममेव सवासवाः ॥ स्वे स्वे स्थाने स्थिता
आसन्यावद्देवाः सवासवाः ॥ ५ ॥ तावत्तत्रैव भगवानागतो वृषभध्वजः ॥ महादेवो विरूपाक्षस्त्र्यम्बको नीललोहितः ॥ ६ ॥ सोऽपि रौद्रे
स्थितः स्थाने बभूव परमेश्वरः ॥ तान्सर्वानागतान्दृष्ट्वा देवानृषिमहोरगान् ॥ ७ ॥ सनत्कुमारो भगवानाजगामाब्जसम्भवः ॥ त्रसरेणुप्रमाणेन
विमाने सूर्यसन्निभे ॥ ८ ॥ अवस्थितो महायोगी भूतभव्यभविष्यवित् ॥ आगम्य शिरसा रुद्रं स ववन्दे महामुनिः ॥ ९ ॥
तानहं संस्थितान्देवान्नारदादीनृषींस्तथा ॥ सनत्कुमाररुद्रौ च दृष्ट्वाहमिदमब्रुवम् ॥ १० ॥ क एषां भवतां याज्यो वरिष्ठश्च नृपोत्तम ॥ एव
मुक्ते तदोवाच रुद्रो मां सुरसन्निधौ ॥ ११ ॥ रुद्र उवाच ॥ शृण्वन्तु विबुधाः सर्वे तथा देवर्षयोऽमलाः ॥ ब्रह्मर्षयश्च विख्याताः सर्वे शृण्वन्तु
मे वचः ॥ १२ ॥ त्वं चागस्त्य महाबुद्धे शृणु मे गदतो वचः ॥ यो यज्ञैरिज्यते देवो यस्मात्सर्वमिदं जगत् ॥ १३ ॥ उत्पन्नं सर्वदा
यस्मिँल्लीनं भवति सामरम् ॥ नारायणः परो देवः सर्वरूपो जनार्दनः ॥ १४ ॥ त्रिधात्मानं स भगवान्ससर्ज परमेश्वरः ॥ रजस्तमोभ्यां
युक्तोऽभूद्रजः सत्त्वाधिकं विभुः ॥ १५ ॥ ससर्ज नाभिकमलाद्ब्रह्माणं कमलासनम् ॥ रजसा तमसा युक्तः सोऽपि मामसृजद्विभुः ॥ १६ ॥
यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदम् ॥ ये सत्त्वरजसी सोऽपि ब्रह्मा कमलसम्भवः ॥ १७ ॥ यो ब्रह्मा सैव देवस्तु यो देवः स चतुर्मुखः ॥
यद्रजस्तमसोपेतं सोऽहं नास्त्यत्र संशयः ॥ १८ ॥ सत्त्वं रजस्तमश्चैव त्रितयं चैतदुच्यते ॥ सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायण।

त्मकम् ॥ १९ ॥ रजसा सत्ययुक्तेन भवेत्सृष्टी रजोऽधिका ॥ तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते ॥ २० ॥ यद्वेदबाह्यं कर्म स्याच्छास्त्र
मुद्दिश्य सेव्यते ॥ तद्रौद्रमिति विख्यातं तन्नेष्टं गदितं नृणाम् ॥ २१ ॥ यद्वा न रजसा कर्म केवलं तामसं तु यत् ॥ तद्दुर्गतिपरं नृणामिह
लोके परत्र च ॥ २२ ॥ सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ॥ नारायणश्च भगवान्यज्ञरूपी विभाव्यते ॥ २३॥ कृते नारायणः
शुद्धः सूक्ष्मरूप उपास्यते ॥ त्रेतायां यज्ञरूपेण पंचरात्रैस्तु द्वापरे ॥ २४ ॥ कलौ मत्कृतमार्गेण बहुरूपेण तामसैः ॥ इज्यते द्वेषबुद्ध्या
सः परमात्मा जनार्दनः ॥ २५ ॥ न तस्मात्परतो देवो भविता न भविष्यति ॥ यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मासौ महेश्वरः ॥ २६ ॥ वेद
त्रये च यज्ञेऽस्मिन्पण्डितेष्वेष निश्चयः ॥ यो भेदं कुरुतेऽस्माकं त्रयाणां द्विजसत्तम ॥२७॥ स पापकारी दुष्टात्मा दुर्गतिं समवाप्नुयात् ॥ इदं
च शृणु मेऽगस्त्य गदतः प्राक्तनं तथा ॥ २८ ॥ यथाकल्पं हरेर्भक्तिं न कुर्वन्तीह मानवाः॥भूर्लोकवासिनः सर्वे पुरा यष्ट्वा जनार्दनम् ॥२९॥
भुवर्लोकं प्रपद्यन्ते तत्रस्था अपि केशवम् ॥ आराध्य स्वर्गतिं यान्ति क्रमान्मुक्त्वा व्रजन्ति हि ॥ ३० ॥ एवं मुक्तिपदे व्याप्ते सर्वलोके
स्तथैव च॥ मुक्तिभाजस्ततो देवास्तं दध्युः प्रयता हरिम् ॥३१ ॥ सोऽपि सर्वगतत्वाच्च प्रादुर्भूतः सनातनः॥उवाच ब्रूत किं कार्यं सर्वे योगि
वराः सुराः॥ ३२॥ ते तं प्रणम्य देवेशमूचुश्च परमेश्वरम् ॥ देवदेव जनः सर्वो मुक्तिमार्गे व्यवस्थितः ॥३३॥ कथं सृष्टिश्च भविता नरकेषु च
को वसेत् ॥ एवमुक्तस्ततो देवैस्तानुवाच जनार्दनः ॥ ३४ ॥ युगानि त्रीणि बहवो-मामुपेष्यन्ति मानवाः ॥ अन्त्ये युगे प्रविरला भविष्यन्ति
मदाश्रयाः ॥ ३५ ॥ एष मोहं सृजाम्याशु यो जनं मोहयिष्यति ॥ त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ ३६ ॥ अल्पायासं दर्श
यित्वा मोहयाशु महेश्वर ॥ एवमुक्त्वा तदा तेन देवेन परमेष्ठिना ॥ ३७॥ आत्मा तु गोपितः सद्यः प्रकाशोऽहं कृतस्तदा ॥ तस्मादारभ्य
कालाच्च मत्प्रणीतेषु सत्तम ॥ ३८ ॥ शास्त्रेष्वभिरतो लोको बाहुल्येन भवेदतः ॥ वेदानुवर्त्तिनं मार्गं देवं नारायणं तथा ॥ ३९ ॥ एकीभावं
च पश्यन्तो मुक्ताश्चैव भवन्ति ते ॥ मां विष्णोर्व्यतिरिक्तं ये ब्रह्मणश्च द्विजोत्तम ॥ ४० ॥ भजन्ते पापकर्माणस्ते यान्ति नरकं नराः ॥ ये
वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च ॥४१॥ नयसिद्धान्तसंज्ञाभिर्मया शास्त्रं तु दर्शितम्॥पाशोऽयं पशुभावस्तु स यदा पतितो भवेत् ॥४२॥

तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितम् ॥ वेदमूर्त्तिरहं विप्र नान्यशास्त्रार्थवादिभिः ॥ ४३ ॥ ज्ञायते मत्स्वरूपं तु मुक्त्वा देवमनादिवत् ॥
वेदवेद्योऽस्मि विप्रर्षे ब्राह्मणैश्च विशेषतः ॥ ४४ ॥ युगानि त्रीण्यहं विप्र ब्रह्मा विष्णुस्तथैव च ॥ त्रयोऽपि सत्त्वादिगुणास्त्रयो वेदास्त्रयोऽ
ग्नयः ॥ ४५ ॥ त्रयो लोकास्त्रयः सन्ध्यास्त्रयो वर्णास्तथैव च ॥ सवनानि तु तावन्ति त्रिधा बद्धमिदं जगत् ॥ ४६ ॥ य एवं वेत्ति विप्रर्षे
परं नारायणं तथा ॥ अपरं पद्मयोनिं तु ब्रह्माणं त्वपरं तु माम् ॥ गुणतो मुख्यतस्त्वेक एवाहं मोह इत्युभे ॥ ४७ ॥ इति श्रीवराहपुराणे
रुद्रगीतासु कृतत्रेताद्वापरवृत्तवर्णनं नाम सप्ततितमोऽध्यायः॥७०॥अथ कलियुगीया विषयाः ॥अगस्त्य उवाच॥एवमुक्तास्ततो देवा ऋषयश्च
पिनाकिना ॥ अहं च नृपते तस्य देवस्य प्रणतोऽभवम् ॥ १ ॥ प्रणम्य शिरसा देवं यावत्पश्यामि भो नृप ॥ तावत्तस्यैव रुद्रस्य देहस्थं
कमलासनम् ॥ २ ॥ नारायणं च हृदये त्रसरेणुसुसूक्ष्मकम् ॥ ज्वलद्भास्करवर्णाभं पश्यामि भवदेहतः ॥ ३ ॥ तं दृष्ट्वा विस्मिताः सर्वे
याजका ऋषयोऽभवन् ॥ जयशब्दरवांश्चक्रुः सामऋग्यजुषां स्वनम् ॥ ४ ॥ कृत्वोचुस्तं तदा देवं किमिदं परमेश्वरम् ॥ एकस्यामेव मूर्त्तौ ते
लक्ष्यन्ते च त्रिमूर्त्तयः ॥ ५ ॥ रुद्र उवाच ॥ यज्ञेऽस्मिन्यद्धुतं हव्यं मामुद्दिश्य महर्षयः ॥ ते त्रयोऽपि वयं भागं गृह्णीमः कविसत्तमाः ॥६॥
नास्माकं विविधो भावो वर्त्तते मुनिसत्तमाः ॥ सम्यग्दृशः प्रपश्यन्ति विपरीतेष्वनेकशः ॥७॥एवमुक्ते तु रुद्रेण सर्वे ते मुनयो नृप ॥ पप्रच्छुः
शङ्करं देवं मोहशास्त्रप्रयोजनम् ॥ ८ ॥ ऋषय ऊचुः ॥ मोहनार्थं तु लोकानां त्वया शास्त्रं पृथक्कृतम् ॥ तत्त्वया हेतुना केन कृतं
देव वदस्व नः ॥ ९ ॥ रुद्र उवाच ॥ अस्त्येकं भारते वर्षे वनं दण्डकसंज्ञितम् ॥ तत्र तीव्रं तपो घोरं गोतमो नाम वै द्विजः ॥ १० ॥
चकार तस्य ब्रह्मा तु परितोषं गतः प्रभुः ॥ उवाच तं मुनिं ब्रह्मा वरं ब्रूहि तपोधन ॥ ११ ॥ एवमुक्तस्तदा तेन ब्रह्मणा लोककर्तृणा ॥
उवाच सस्यपंक्तिं मे धान्यानां देहि सङ्कता ॥ १२ ॥ एवमुक्तो ददौ तस्य तमेवार्थं पितामहः ॥ लब्ध्वा तु तं वरं विप्रः शतशृङ्गे
महाश्रमम् ॥ १३ ॥ चकार तस्योषसि च पाकान्ते शालयो द्विजैः ॥ लूयन्ते तेन मुनिना मध्याह्ने पच्यते तथा ॥ १४ ॥ सर्वातिथ्यमसौ
विप्रो ब्राह्मणेभ्यो ददात्यलम् ॥ कस्यचित्त्वथ कालस्य महती द्वादशाब्दिका ॥ १५ ॥ अनावृष्टिर्द्विजवर ह्यभवल्लोमहर्षिणी ॥ तां दृष्ट्वा

मुनयः सर्वे अनावृष्टिं वनेचराः ॥ १६ ॥ क्षुधया पीड्यमानाश्च प्रययुर्गौतमं तदा ॥ अथ तानागतान्दृष्ट्वा गौतमः शिरसा नतः ॥ १७ ॥
उवाच स्थीयतां मह्यं गृहे मुनिवरात्मजाः ॥ एवमुक्तास्तु ते तेन तस्थुर्विविधभोजनम् ॥ १८ ॥ भुञ्जमाना अनावृष्टिर्यावत्सा निवृत्ताऽभवत्॥
निवृत्तायां च ते तस्यामनावृष्ट्यां तु ते द्विजाः ॥ १९ ॥ तीर्थयात्रानिमित्तं तु प्रयातुमनसोऽभवन् ॥ तत्र शाण्डिल्यनामानं तापसं मुनिसत्त
मम् ॥ २० ॥ प्रत्युवाचेति संचिन्त्य मारीचः परमो मुनिः ॥ मारीच उवाच ॥ शाण्डिल्य शोभनं वक्ष्ये पिता ते गौतमो मुनिः ॥ २१ ॥
तमनुक्त्वा न गच्छामस्तपश्चर्तुं तपोवनम् ॥ एवमुक्तेऽथ जहसुः सर्वे ते मुनयस्तथा ॥ २२ ॥ किमस्माभिः स्वको देहो विक्रीतोऽस्यान्नभक्ष
णात्॥एवमुक्त्वा पुनश्चोचुः सोपाधिं गमनं प्रति ॥२३ ॥ कृत्वा मायामयीं गां तु तच्छालायां व्यसर्जयन् ॥ तां चरन्तीं ततो दृष्ट्वा शालायां
गौतमो मुनिः ॥ २४ ॥ गृहीत्वा सलिलं पाणौ प्राणिरुद्रे (?) त्यभाषत ॥ ततो मायामयी सा गौः पपात जलबिन्दुवत् ॥ २५ ॥ निहतां
तां ततो दृष्ट्वा मुनीन् जिगमिषूंस्तथा ॥ उवाच गौतमो धीमांस्तान्मुनीन्प्रणतः स्थितः ॥२६॥ किमर्थं गम्यते विप्राः साधु शंसत मा चिरम्॥
मां विहाय सदा भक्तं प्रणतं च विशेषतः ॥ २७ ॥ ऋषय ऊचुः ॥ गोवध्येयमिह ब्रह्मन्यावत्तव शरीरगा ॥ तावदत्र न भुञ्जामो भवतोऽन्नं
महामुने ॥ २८ ॥ एवमुक्तो गौतमस्तु तान्मुनीन्प्राह धर्मवित् ॥ प्रायश्चित्तं गोवधस्य दीयतां मे तपोधनाः ॥ २९ ॥ ऋषय ऊचुः ॥ इयं
गौरमृता ब्रह्मन्मूर्च्छितेव व्यवस्थिता ॥ गङ्गाजलप्लुता चेयमुत्थास्याति न संशयः ॥३०॥ प्रायश्चित्तं मृतायाः स्यादमृतायाः कृतं त्विदम् ॥
व्रतं वा मा कृथाः कोपमित्युक्त्वा प्रययुस्तु ते ॥३१ ॥ गतेस्तेगौतमो धीमान् हिमवन्तं महागिरिम् ॥ आरिराधयिषुः प्रायात्तप्तुं चाशु महा
तपः ॥ ३२ ॥ शतमेकं तु वर्षाणामहमाराधितोऽभवम् ॥ तुष्टेन च मया प्रोक्तो वरं वरय सुव्रत ॥ ३३ ॥ सोऽब्रवीन्मां जटासंस्थां देहि गङ्गां
तपस्विनीम् ॥ मया सार्द्धं प्रयात्वेषा पुण्या भागीरथी नदी ॥३४॥ एवमुक्ते जटाखण्डमेकं स प्रददौ शिवः ॥ तां गृह्य गतवान्सोऽपि यत्रास्ते
सा तु गौर्मृता ॥ ३५ ॥ तज्जलप्लाविता सा गौर्गता चोत्थाय भामिनी ॥ नदी च महती जाता पुण्यतोया शुचिह्रदा ॥ ३६ ॥ तं दृष्ट्वा महदा
श्चर्यं तत्र सप्तर्षयोऽमलाः ॥ आजग्मुश्च विमानस्थाः साधु साध्विति वादिनः ॥ ३७ ॥ साधु गौतम साधूनां कोऽस्ति वा सदृशं तव ॥ यदेवं

जाह्नवी देवी दण्डके चावतारिता ॥ ३८॥ एवमुक्तस्तदा तैस्तु गौतमः किमिदं त्विति ॥ गोवध्याकारणं मह्यं तावत्पश्यति गौतमः ॥ ३९ ॥
ऋषीणां मायया सर्वमिदं जातं विचिन्त्य वै ॥ शशाप तान् जटाभस्ममिथ्याव्रतधरांस्तथा ॥ ४० ॥ भविष्यथ त्रयीबाह्या वेदकर्म
बहिष्कृताः ॥ तच्छ्रुत्वा क्रूरवचनं गौतमस्य महामुनेः॥४१॥ ऊचुः सप्तर्षयो मैवं सर्वकालं द्विजोत्तम ॥ एवन्तु किन्तु ते वाक्यं मोघं नास्त्यत्र
संशयः ॥ ४२ ॥ यदि नाम कलौ सर्वे भविष्यन्ति द्विजोत्तमाः ॥ उपकारार्ण एते हि अपकर्त्तार एव तु ॥ ४३ ॥ इत्थम्भूता अपि कलौ
भक्तिभाजो भवन्तु ते ॥ त्वद्वाक्यवह्निनिर्दग्धाः सदा कालियुगे द्विजाः ॥ ४४ ॥ भविष्यन्ति क्रियाहीना वेदकर्मबहिष्कृताः ॥ अस्याश्च गौणं
नामेह नदी गोदावरीति च ॥ ४५ ॥ एतां प्राप्य कलौ ब्रह्मन्गां ददन्ति जनाश्च ये ॥ यथाशक्त्या तु दानानि मोदन्ते त्रिदशैः सह ॥ ४६ ॥
सिंहस्थे च गुरौ तत्र यो गच्छति समाहितः ॥ स्नात्वा च विधिना तत्र पितॄंस्तर्पयते तथा॥४७॥स्वर्गं गच्छन्ति पितरो निरये पतिता अपि॥
स्वर्गस्थाः पितरस्तस्य मुक्तिभाजो न संशयः ॥ ४८ ॥ त्वं ख्यातिं महतीं प्राप्य मुक्तिं यास्यासि शाश्वतीम् ॥ एवमुक्त्वाथ मुनयो ययुः
कैलासपर्वतम् ॥ ४९ ॥ यत्राहमुमया सार्द्धं सदा तिष्ठामि सत्तमाः ॥ ऊचुर्मां ते च मुनयो भवितारो द्विजोत्तमाः ॥ ५० ॥ कलौ त्वद्रूपिणः
सर्वे जटामुकुटधारिणः ॥ स्वेच्छया प्रेतवेषाश्च मिथ्यालिङ्गधराः प्रभो ॥ ५१ ॥ तेषामनुग्रहार्थाय किंचिच्छास्त्रं प्रदीयताम् ॥ ये चास्म
द्वंशजाः सर्वे वर्त्तेयुः कलिपीडिताः ॥ ५२ ॥ एवमभ्यर्थितस्तैस्तु पुराहं द्विजसत्तम ॥ वेदक्रियासमायुक्तां कृतवानास्मि संहिताम् ॥ ५३ ॥
निःश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः ॥ अल्पापराधं श्रुत्वैव गतास्ते दाम्भिकाभवन् ॥ ५४ ॥ मयैव मोहितास्ते तु भविष्य
ज्जानता द्विजाः ॥ लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः ॥ ५५ ॥ निःश्वाससंहितायां हि लक्षमात्रं प्रमाणतः ॥ सैव पाशुपती
दीक्षा योगः पशुपतेस्तथा ॥ ५६ ॥ एतस्माद्वेदमार्गाद्धि यदन्यादिह जायते ॥ तत्क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् ॥ ५७ ॥ ये रुद्रमुप
जीवन्ति कलौ वेदान्तिका नराः ॥ लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः ॥ ५८ ॥ उच्छुष्मरुद्रास्ते ज्ञेया नाहं तेषु व्यवस्थितः ॥
भैरवेण स्वरूपेण देवकार्ये यदा पुरा ॥ ५९ ॥ नर्त्तितं तु मया सोऽयं सम्बन्धः क्रूरकर्मणाम् ॥ क्षयं निनीषता दैत्यान्सोऽट्टहासो मया

कृतः॥६०॥ यः पुरा तत्र ये मह्यां पतिता अश्रुबिन्दवः॥ असंख्यातास्तु ते रौद्रा भवितारो महीतले॥६१॥ उच्छुष्मनिरता रौद्राः सुरामांस
प्रियाः सदा॥ स्त्रीलोलाः पापकर्माणः सम्भूता भूतलेषु ते॥ ६२॥ तेषां गौतमशापाद्धि भविष्यन्त्यन्वये द्विजाः॥ तेषां मच्छासनरताः सदा
चाराश्च ये द्विजाः॥ ६३॥ स्वर्गं चैवापवर्गं च इत्युक्ता संशयात्पुरा॥ वेदान्तिकाऽधो यास्यन्ति मम सन्ततिदूषकाः॥ ६४॥ प्राग्गौतमाऽ
ग्निना दग्धाः पुनर्मद्वचनाद्विजाः॥ नरकं तु गमिष्यन्ति नात्र कार्या विचारणा॥ ६५॥ रुद्र उवाच॥ एवं मया ब्रह्मसुताः प्रोक्ता जग्मुर्यथा
गतम्॥ गौतमोऽपि स्वकं गेहं जगामाशु परन्तपः॥ ६६॥ एतद्वः कथितं विप्रा मया धर्मस्य लक्षणम्॥ एतस्माद्विपरीतो यः स पाषण्ड
रतो भवेत्॥ ६७॥ इति श्रीवराहपुराणे रुद्रगीतासु ब्राह्मणानां शापो नाम एकसप्ततितमोऽध्यायः॥ ७१॥ अथ प्रकृतिपुरुषनिर्णयः॥ वराह
उवाच॥ सर्वज्ञं सर्वकर्तारं भवं रुद्रं पुरातनम्॥ प्रणम्य प्रयतोऽगस्त्यः पप्रच्छ परमेश्वरम्॥१॥ अगस्त्य उवाच॥ भवान् ब्रह्मा च विष्णुश्च
त्रयमेतत्त्रयी स्मृता॥ दीपोऽग्निर्दीपसंयोगैः सर्वशास्त्रेषु सर्वगः॥ २॥ कस्मिन् प्रधानो भगवान् काले कस्मिन्नधोक्षजः॥ ब्रह्मा
वा एतदाचक्ष्व मम देव त्रिलोचन॥ ३॥ रुद्र उवाच॥ विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते॥ वेदसिद्धान्तमार्गेषु
तन्न जानन्ति मोहिताः॥ ४॥ विश प्रवेशने धातुस्तत्र स्नुप्रत्ययादनु॥ विष्णुर्यः सर्वदेवेषु परमात्मा सनातनः॥ ५॥ योऽयं विष्णुस्तु
दशधा कीर्त्यते चैकधा द्विजाः॥ स आदित्यो महाभाग योगैश्वर्यसमन्वितः॥ ६॥ यो देवकार्याणि सदा कुरुते परमेश्वरः॥ मनुष्यभाव
माश्रित्य स मां स्तौति युगे युगे॥ ७॥ लोकमार्गप्रवृत्त्यर्थं देवकार्यार्थसिद्धये॥ अहं च तं सदा स्तौमि श्वेतद्वीपे कृते युगे॥ ८॥ सृष्टि
काले चतुर्वक्त्रं स्तौमि कालो भवामि च॥ ब्रह्मा देवासुराः स्तौति मां सदा तु कृते युगे॥९॥ लिङ्गमूर्त्तिं च मां देवा यजन्ते भोगकाङ्क्षिणः॥
सहस्रशीर्षकं देवं मनसा तु मुमुक्षवः॥१०॥ यजन्ते यं स विश्वात्मा देवो नारायणः स्वयम्॥ ब्रह्मयज्ञेन ये नित्यं यजन्ते द्विजसत्तम॥११॥
ते ब्रह्माणं प्रीणयन्ति वेदो ब्रह्मा प्रकीर्त्तितः॥ नारायणः शिवो विष्णुः शङ्करः पुरुषोत्तमः॥१२॥ एतेषु नामभिर्ब्रह्म परं प्रोक्तं सनातनम्॥
कर्म्मवेदयुजां विप्र ब्रह्मा विष्णुर्महेश्वरः॥ १३॥ वयं त्रयोऽपि मन्त्राद्या नात्र कार्या विचारणा॥ अहं विष्णुस्तथा वेदा ब्रह्मकर्माणि

चाप्युत ॥ १४ ॥ एतत्त्रयं त्वेकमेव न पृथग्भावयेत्सुधीः ॥ योऽन्यथा भावयेदेतत्पक्षपातेन सुव्रत ॥ १५ ॥ स याति नरकं घोरं तेनैवं पापपूरुषाः ॥ अहं ब्रह्मा च विष्णुश्च ऋग्यजुःसाम चैव तु ॥ तेनास्मिन् भेदमप्याहुः सर्वेषां द्विजसत्तमाः ॥ १६ ॥ इति श्रीवराहपुराणे प्रकृतिपुरुषनिर्णये द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ अथ वैराजवृत्तम् ॥ रुद्र उवाच ॥ शृणु चान्यद्द्विजश्रेष्ठ कौतूहलसमन्वितम् ॥ अभूतपूर्वं सलिले मग्नेन मुनिपुङ्गव ॥ १ ॥ ब्रह्मणाहं पुरा सृष्टः प्रोक्तश्चं सृज वै प्रजाः ॥ अविज्ञानसमर्थोऽहं निमग्नः सलिले द्विज ॥ २ ॥ तत्र यावत्क्षणं चैकं तिष्ठामि प[illegible]म् ॥ अंगुष्ठमात्रपुरुषं ध्यायन्प्रयतमानसः ॥ ३ ॥ तावज्जलात्समुत्तस्थुः प्रलयाग्निसमप्रभाः ॥ पुरुषा दश चैकश्च ताप यन्तोंशुभिर्जलम् ॥ ४॥ मया पृष्टाः के भवन्तो जलादुत्तीर्य तेजसा ॥ तापयन्तो जलं चेदं क्व वा यास्यथ शंसत ॥५॥ एवमुक्ता मया ते तु नोचुः किंचन सत्तमाः ॥ एवमेव गतास्तूष्णीं ते नरा द्विजपुङ्गवाः ॥ ६ ॥ ततस्तेषामनु महापुरुषोऽतीव शोभनः ॥ स तस्मिन्मेघ सङ्काशः पुण्डरीकनिभेक्षणः ॥ ७ ॥ तमहं पृष्टवान्कस्त्वं के चेमे पुरुषा गताः ॥ किं वा प्रयोजनमिह कथ्यतां पुरुषर्षभ ॥ ८ ॥ पुरुष उवाच ॥ य एते वै गताः पूर्वं पुरुषा दीप्ततेजसः ॥ आदित्यास्तेऽम्बशा यान्ति ध्याता वै ब्रह्मणाभवन् ॥ ९ ॥ सृष्टिं सृजति वै ब्रह्मा तदर्थं यान्त्यमी नराः ॥ प्रतिपालनाय तस्यास्तु सृष्टेर्दैव न संशयः ॥ १० ॥ शम्भुरुवाच ॥ जानीयां भगवन्कथं महापुरुषसत्तमम् ॥ भवेति नाम्ना तत्सर्वं कथयस्व परो ह्यहम् ॥ ११ ॥ एवमुक्तस्तु रुद्रेण स पुमान्प्रत्यभाषत ॥ अहं नारायणो देवो जलशायी सनातनः ॥ १२ ॥ दिव्यं चक्षुर्भवति वै तव मां पश्य यत्नतः ॥ एवमुक्तस्तदा तेन यावत्पश्याम्यहं तु तम् ॥ १३ ॥ तावदङ्गुष्ठमात्रं तु ज्वलद्भास्करतेजसम् ॥ तमेवाहं प्रपश्यामि तस्य नाभौ तु पङ्कजम् ॥ १४ ॥ ब्रह्माणं तत्र पश्यामि आत्मानं च तदन्तिके ॥ एवं दृष्ट्वा महात्मानं ततो हर्षमुपागतः ॥ १५ ॥ तं स्तोतुं द्विजशार्दूल मतिर्मे समजायत ॥ तस्यां मतौ तु जातायां स्तोत्रेणानेन सुव्रत ॥ १६ ॥ स्तुतो मया स विश्वात्मा तपसा स्मृतकर्मणा ॥१७॥ रुद्र उवाच ॥ नमोऽस्त्वनन्ताय विशुद्धचेतसे सरूपरूपाय सहस्रबाहवे ॥ सहस्ररश्मिप्रवराय वेधसे विशालदेहाय विशुद्धकर्म्मणे ॥ १८ ॥ समस्तविश्वार्तिहराय शम्भवे सहस्रसूर्यानिलतिग्मतेजसे ॥ समस्तविद्याविधृताय चक्रिणे समस्तगीर्वाणनुते सदा

नमः ॥१९॥ अनादिदेवाच्युत शेषशेखर प्रभो विभो भूतपते महेश्वर॥मरुत्पते सर्वपते जगत्पते भुवःपते भुवनपते सदा नमः ॥२०॥ जलेश नारायण विश्वशङ्कर क्षितीश विश्वेश्वर विश्वलोचन॥शशाङ्क सूर्याच्युत वीर विश्वग प्रतर्क्यमूर्तेऽमृतमूर्त्तिरव्यय॥२१॥ ज्वलद्धुताशार्चिविरुद्ध मण्डल प्रपाहि नारायण विश्वतोमुख ॥ नमोऽस्तु देवार्त्तिहरामृताव्यय प्रपाहि मां शरणगतं सदाच्युत ॥ २२ ॥ वक्त्राण्यनेकानि विभो तवाहं पश्यामि मध्यस्तगतं पुराणम् ॥ ब्रह्माणमीशं जगतां प्रसूतिं नमोऽस्तु मह्यं तु पितामहाय ॥ २३ ॥ संसारचक्रभ्रमणैरनेकैः क्वचिद्भवान्देववरादिदेव ॥ सन्मार्गिभिर्ज्ञानविशुद्धसत्त्वैरुपास्यसे किं प्रणमाम्यहं त्वाम् ॥ २४ ॥ एकं भवन्तं प्रकृतेः परस्ताद्यो वेत्ति वा सर्वविदादिदेव ॥ गुणा न तेषु प्रसभं विभेद्या विशालमूर्त्तिर्हि सुसूक्ष्मरूपः ॥ २५ ॥ वाग्योनिमात्रो विगतेन्द्रियोऽसि विकर्म्मभावान्न विगतैककर्म्मा ॥ संसारवांस्त्वं हि न तादृशोऽसि परं वपुर्देव विशुद्धभावैः ॥ २६ ॥ संसारविच्छित्तिकरैर्यजाद्भिरतोऽवसीयेत चतुर्भुजस्त्वम् ॥ परं न जानाति यतो वपुस्ते देवादयोऽप्यद्भुतकारणं तत् ॥ २७ ॥ अतोऽवतारोक्ततनुं पुराणमाराधयेयुः कमलासनाद्याः ॥ न ते वपुर्विश्वसृगब्जयोनिरेकान्ततो वेद महानुभावः ॥ २८ ॥ परं त्वहं वेद्मि कविं पुराणं भवन्तमाद्यं तपसा विशुद्धः ॥ पद्मासनो मे जनकः प्रसिद्धश्चैवः प्रसूतावसकृत्पुराणैः ॥ २९ ॥ सम्बुध्यते नाथ न मद्विधाऽपि विदुर्भवन्तं तपसा विहीनाः ॥ ब्रह्मादिभिस्तत्प्रवरैरबोध्यं त्वां देवरूपाः समनन्तनत्या ॥ ३० ॥ प्रबोधमिच्छन्ति न तेषु बुद्धेरुदारकीर्तिष्वपि वेदहीनाः ॥ जन्मान्तरैर्वंशविदां विवेकैर्बुद्धिर्भवेन्नाथ तव प्रसादात् ॥३१॥ त्वल्लब्धलाभस्य न मानुषत्वं न देवगन्धर्वगतिः शिवं स्यात् ॥ त्वं विश्वरूपोऽसि भवान्सुसूक्ष्म स्थूलोऽसि चेदं कृतकृत्यताद्य ॥ ३२ ॥ स्थूलः सुसूक्ष्मः सुलभोऽसि देव त्वद्बाह्यवृत्त्या नरके पतन्ति ॥ किमुच्यते वा भवति स्थितेऽस्मिन्नाथे तु वस्वर्कमरुन्महीभिः ॥ ३३ ॥ सत्त्वैः सतोयैः समरूपधारिण्यात्मस्वरूपे विततस्वभावे ॥ इति स्तुतीमें भगवाननन्त जुषस्व भक्तस्य विशेषतश्च ॥ ३४ ॥ सृष्टिं सृजस्वेति तवोदितस्य सर्वज्ञतां देहि नमोऽस्तु विष्णो ॥ चतुर्मुखो वा यदि कोटिवक्त्रो भवेन्नरः कोऽपि विशुद्धचेताः ॥ ३५ ॥ स मे गुणानामयुतैरनेकैर्वदेत्तदा देववर प्रसीद ॥ समो वियुक्तस्य विशुद्धभावस्तद्भावभावैकमनोऽनुगस्य ॥ ३६ ॥ सदा हृदिस्थोऽसि भवान्नमस्ते न सर्वगस्यास्ति

पृथग्व्यवस्था ॥ इति प्रकाशं कृतमेतदीश स्तवं मया सर्वगतं विबुद्ध्वा ॥ ३७ ॥ संसारचक्रक्रमणयुक्त्या भीतं पुनर्मामच्युत केवलं
त्वम् ॥३८॥ वराह उवाच ॥ इति स्तुतस्तदा देवो रुद्रेणामिततेजसा ॥ उवाच वाक्यं सन्तुष्टो मेघगम्भीरनिःस्वनः ॥ ३९ ॥ विष्णुरुवाच ॥
वरं वरय भद्रं ते देवदेव उमापते ॥ न भेदश्चावयोर्देव एकावावामुभावपि ॥ ४० ॥ रुद्र उवाच ॥ ब्रह्मणाहं नियुक्तस्तु प्रजाः सृज इति प्रभो ॥
तत्र ज्ञानं प्रयच्छस्व त्रिविधं भूतभावन ॥४१॥ विष्णुरुवाच ॥ सर्वज्ञस्त्वं न सन्देहो ज्ञानराशिः सनातनः ॥ देवानां च परं पूज्यः सर्वथा त्वं
भविष्यसि ॥४२॥ एवमुक्तः पुनर्वाक्यमुवाचोमापतिस्तदा ॥ अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु ॥ ४३॥ मूर्तो भूत्वा भवानेव मामाराधय
केशव ॥ मां वहस्व स देवेश वरं मत्तो गृहाण च ॥ येन त्वं सर्वदेवानां पूज्यात्पूज्यतरो भव ॥ ४४ ॥ देवकार्यावतारेषु मानुषत्वमुपागतः ॥
त्वामेवाराधयिष्यामि त्वं च मे वरदो भव ॥४५॥ यत्त्वयोक्तं वहस्वेति देवदेव उमापते ॥ सोऽहं वहामि देव त्वां मेघो भूत्वा शतं समाः ॥४६॥
एवमुक्त्वा हरिर्मेघः स्वयं भूत्वा महेश्वरम् ॥ उज्जहार जलात्तस्माद्वाक्यं देवमुवाच ह ॥४७॥ य एते दश चैकस्य पुरुषाः प्राकृताः प्रभो॥ते
वैराजा महीं याता आदित्या इति संज्ञिताः॥४८॥मदंशो द्वादशो यस्तु विष्णुनामा महीतले ॥ अवतीर्णो भवन्तं तु आराधयति शंकर॥४९॥
एवमुक्त्वा स्वकादंशात्सृष्ट्वा दिव्यं घनं तथा ॥ नारायणः शब्दवच्च न विद्मः क्व लयं गतः॥५०॥ रुद्र उवाच ॥ एवमेष हरिर्देवः सर्वगः सर्व
भावनः ॥ वरदोऽभूत्पुरा मह्यं तेनाहं देवतेश्वरः॥५१॥नारायणात्परो देवो न भूतो न भविष्यति॥ एतद्रहस्यं वेदानां पुराणानां च सत्तम॥५२॥
मया वः कीर्तितं सर्वं यथा विष्णुरिहेज्यते ॥५३॥ इति श्रीवराहपुराणे रुद्रगीतासु वैराजवृत्तं नाम त्रयःसप्ततितमोऽध्यायः ॥ ७३ ॥ अथ
भुवनकोशवर्णनम् ॥ वराह उवाच ॥ पुनस्ते ऋषयः सर्वे तं पप्रच्छुः सनातनम् ॥ रुद्रं पुराणपुरुषं शाश्वतं क्रतुमव्ययम् ॥ १ ॥ विश्वरूपमजं
शम्भुं त्रिणेत्रं शूलपाणिनम् ॥ ऋषय ऊचुः ॥ त्वं परः सर्वदेवानामस्माकं च सुरेश्वर॥२॥ पृच्छामस्तेन त्वां प्रश्नमेकं तद्वक्तुमर्हसि ॥ भूमि
प्रमाणं संस्थानं पर्वतानां च विस्तरम् ॥३॥ अस्माकं ब्रूहि कृपया देवदेव उमापते ॥रुद्र उवाच॥सर्वेष्वेव पुराणेषु भूर्लोकः परिकीर्त्यते ॥४॥
इदानीं च प्रवक्ष्यामि समासाद्वः क्षमातलम् ॥ तन्निबोधत धर्मज्ञा गदतो मम सत्तमाः ॥ ५ ॥ योऽसौ सकलविद्यावबोधितपरमात्मरूपी विगत

॥ ५९ ॥

कल्मषः परमाणुरचिन्त्यात्मा नारायणः सकललोकव्यापी पीताम्बरोरुवक्षःक्षितिधरो गुणतः सूच्यते ॥ तमस्त्वप्रपंचमहीर्वमहत्त्वमकुशमलो हितमित्येवमाद्युपलक्षितविज्ञानमात्ररूपः स भगवांस्त्वप्रकारः सत्त्वरजस्तमोद्रिक्तः सलिलं ससर्ज ॥ तत्सृष्ट्वा आदिपुरुषः परमेश्वरो नारायणः सकलजगन्मयः सर्वमयो देवमयो यज्ञमय आपोमय आपोमूर्तिः ॥ योगनिद्रया सुप्तस्य तस्य नाभौ तदब्जं निःससार ॥ तस्मिन्सकलवेदनिधिरचिन्त्यात्मा परमेश्वरो ब्रह्मा प्रजापतिरभवत् ॥ स च सनकसनन्दनसनातनसनत्कुमारादीञ्ज्ञानधर्मणः पूर्वमुत्पाद्य पश्चान्मनुं स्वायम्भुवं मरीच्यादीन्दक्षान्त्यान्ससर्ज ॥ यः स्वायम्भुवो मनुर्भगवता सृष्टः ॥ तस्मादारभ्य भुवनस्यातिविस्तरो वर्ण्यते ॥ तस्य च मनोर्द्वौ पुत्रौ बभूवतुः प्रियव्रतोत्तानपादौ ॥६॥ प्रियव्रतस्य दश पुत्राः बभूवुः आग्नीध्रोऽग्निबाहुर्मेधो मेधातिथिर्ध्रुवो ज्योतिष्मान्द्युतिमान्हव्यो वपुष्मान्सवनान्ताः॥द्वितीयः स च प्रियव्रतः सप्तद्वीपेषु सप्तपुत्रान्स्थापयामास ॥ तत्र चाग्नीध्रं जम्बूद्वीपेश्वरं चक्रे शाकद्वीपेश्वरं मेधातिथिं ज्योतिष्मन्तं क्रौंचे द्युतिमन्तं शाल्मलौ गोमेदस्येश्वरं हव्यं वपुष्मन्तं प्लक्षद्वीपेश्वरं पुष्कराधिपतिं सवनमिति ॥ पुष्करेशस्यापि सवनस्य द्वौ पुत्रौ महावीतिधातकौ भवेताम्॥ तयोर्नाम्ना तौ देशौ व्यवस्थितौ ॥ धातके धातकीखण्डं कुमुदस्य च कौमुदम्॥शाल्मलाधिपतेरपि ज्योतिष्मतस्त्रयः पुत्राः स्युः कुशवैद्युतजीमूतवाहनाः ॥ तेषां नाम्ना ते देशा जाताः ॥ तथा च द्युतिमतः सप्त पुत्राः कुशलो मनुगव्यो स्तः पीवरोऽप्रान्धकारकमुनिर्दुन्दुभिश्चेति तन्नाम्ना क्रौंचे सप्त महादेशनामानि ॥७॥ कुशद्वीपेश्वरस्यापि ज्योतिष्मतः सप्त पुत्राः। उद्भिदो वेणुमांश्चैव रथपालो मनो धृतिःप्रभाकरः कपिल इति ॥ तत्तन्नामानि वर्षाणि द्रष्टव्यानि ॥ शाकाधिपस्यापि मेधातिथेः सप्त पुत्राः नाभिशान्तभयाशिशिरसुखोदमनन्दाशिवक्षेमकध्रुवा इति ॥ तन्नामान्येव वर्षाणि नाभेर्हैमवन्तं हेमकूटं किम्पुरुषं नैषधं हरिवर्षं मेरुमध्यामिलावृतं नीलं रम्यकं श्वेतं हिरण्मयमुत्तरं च शृङ्गवतः कुरवो माल्यवन्तं भद्राश्वं गन्धमादनम् ॥ केतुमाले तु ॥ एवं स्वायम्भुवेऽन्तरे भुवनप्रतिष्ठा ॥ कल्पे कल्पे चैवमेव सप्तसप्तपार्थिवैः क्रियते भूमेः पालनव्यवस्था च ॥ एष स्वभावः कल्पस्य सदा भवतीति ॥८॥अत्र नाभेः सर्गं कथयामि । नाभिर्मेरुदेव्यां पुत्रमजनयदृषभनामानं तस्य भरतो जज्ञे पुत्रश्च तावदग्रजः तस्य भरतस्य पिता ऋषभः हेमाद्रेर्दक्षिणं वर्षं महद्भारतं नाम शशास॥भरतस्य पुत्रः सुमतिस्तस्य राज्यं दत्त्वा सोऽपि वनं ययौ ॥

सुमतेस्त्वेजस्तत्पुत्रः सत्सुतस्तस्याऽपीन्द्रद्युम्नस्तस्यापि परमेष्ठी तस्य प्रतिहर्ता तस्य निखातः निखातस्य उन्नेता उन्नेतुरप्यभावस्तस्योद्गाता तस्य प्रस्तोता प्रस्तोतुर्विभुर्विभोः पृथुः पृथोरनन्तः अनन्तस्य गयः गयस्य नयः तस्य विराटः तस्य महावीर्यस्तस्य सुधीमान् ॥ ९ ॥ ॥ तस्य पुत्रशतं जज्ञे तेनेमा वर्द्धिताः प्रजाः ॥ तैरिदं भारतं वर्षं सप्तद्वीपं समाङ्कितम् ॥ १० ॥ तेषां वंशप्रसूत्या तु भुक्तेयं भूमिरुत्तमा ॥ कृतत्रेतादि युक्ता तु युगाख्या ह्येकसप्ततिः ॥ ११ ॥ भुवनस्य प्रसङ्गेन मन्वन्तरमिदं शुभम् ॥ स्वायम्भुवं च कथितमपरं यन्निबोधत ॥ १२ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशवर्णनं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ अथ जम्बूद्वीपमेरुनिरूपणम् ॥ रुद्र उवाच ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि जम्बूद्वीपं यथातथम् ॥ संख्या चापि समुद्राणां द्वीपानां चैव विस्तरम् ॥ १ ॥ यावन्ति चैव वर्षाणि तेषु नद्यश्च याः स्मृताः ॥ महाभूतप्रमाणं च गतिं चंद्रार्कयोः पृथक् ॥ २ ॥ द्वीपभेदसहस्राणि सप्तस्वन्तर्गतानि च ॥ न शक्यन्ते क्रमेणेह वक्तुं यैर्व्विततं जगत् ॥ ३ ॥ सप्त द्वीपान्प्रवक्ष्यामि चन्द्रादित्यग्रहैः सह ॥ येषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ॥ ४ ॥ अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् ॥ प्रकृतेश्च परं यत्तु तदचिन्त्यं विभाव्यते ॥ ५ ॥ नववर्षं प्रवक्ष्यामि जम्बूद्वीपं यथातथम् ॥ विस्तारं मण्डलं चैव योजनैस्तन्निबोधत ॥ ६ ॥ शतमेकं सहस्राणां योजनानां समन्ततः ॥ नानाजनपदाकीर्णं योजनैर्विविधैः शुभैः ॥ ७ ॥ सिद्धचारणसङ्कीर्णं पर्वतैरुपशोभितम् ॥ सर्वधातुविबृद्धैश्च शिलाजालसमुद्भवैः ॥ ८ ॥ पर्वतप्रभवाभिश्च नदीभिः सर्वतश्चितम् ॥ जम्बूद्वीपं पृथु श्रीमत्सर्वतः परिमण्डलम् ॥ ९ ॥ नवभिश्चावृतं श्रीमान्यत्रास्ते भूतभावनः ॥ लवणेन समुद्रेण सर्वतः परिवारितः ॥ १० ॥ जम्बूद्वीपश्च विस्तारात्समेन तु समन्ततः ॥ तस्य प्रागायता दीर्घाः षडेते वर्षपर्वताः ॥ ११ ॥ उभयत्रावगाढाश्च समुद्रौ पूर्वपश्चिमौ ॥ हिमप्रायश्च हिमवान्हेमकूटश्च हेमवान् ॥ १२ ॥ सर्वत्र सुसुखश्चापि निषधः पर्वतो महान् ॥ चतुर्वर्णः ससौवर्णो मेरुश्चोक्तो मया गिरिः ॥ १३ ॥ वृत्ताकृतिप्रमाणश्च चतुरस्रः समुत्थितः ॥ नानावर्णः सुपार्श्वेषु प्रजापतिगणान्वितः ॥ १४ ॥ नाभिमण्डलसम्भूतो ब्रह्मणः परमेष्ठिनः ॥ पूर्वतः श्वेतवर्णस्तु ब्राह्मण्यं तेन तस्य तत् ॥ १५ ॥ पीतश्च दक्षिणेनासौ तेन वैश्यत्वमिष्यते ॥ भृङ्गपत्रनिभश्चासौ पश्चिमेन यतोऽथ सः ॥ १६ ॥ तेनास्य शूद्रता प्रोक्ता मेरोर्नामार्थकर्मणः ॥ पार्श्वमुत्तरस्तस्य रक्त

वर्णं विभाव्यते ॥ १७॥ तेनास्य क्षत्रभावः स्यादिति वर्णाः प्रकीर्तिताः ॥ वृत्तः स्वभावतः प्रोक्तो वर्णतः परिमाणतः ॥१८॥ नलिश्च वैदूर्यमयः श्वेतशुक्लो हिरण्मयः ॥ मयूरबर्हिवर्णस्तु शातकौम्भस्य शृङ्गवान् ॥ १९॥ एते पर्वतराजा वै सिद्धचारणसेविताः ॥ तेषामन्तराविष्कम्भो नवसाहस्र उच्यते ॥ २० ॥ मध्ये त्विलावृतं नाम महामेरोस्तु सम्भवः ॥ तेनैव तु सहस्राणि विस्तीर्णः सर्वतश्च सः ॥ २१ ॥ मध्यं तस्य महामेरुर्विधूम इव पावकः ॥ वेद्यर्द्धं दक्षिणं मेरोरुत्तरार्द्धं तथोत्तरम् ॥ २२ ॥ षडत्र वर्षाणि यानि तेषां ते वर्षपर्वताः ॥ योजनाग्रं तु वर्षाणां सर्वेषां तद्विधीयते ॥ २३ ॥ द्वे द्वे वर्षे सहस्राणां राजन्यानां समुच्छ्रयः ॥ जम्बूद्वीपस्य विस्तारस्तेषामायाम उच्यते ॥ २४ ॥ योजनानां सहस्राणां शते द्वे चापि तौ गिरी ॥ नीलश्च निषधश्चैव ताभ्यां हीनाश्च ये परे ॥ २५ ॥ श्वेतश्च हेमकूटश्च हिमवाञ्छृङ्गवांश्च यः ॥ जम्बूद्वीपप्रमाणेन निषधः परिकीर्त्तितः ॥ २६ ॥ तस्माद्द्वादशभागेन हेमकूटः प्रहीयते ॥ हिमवान्विंशभागेन हेमकूटात्प्रहीयते ॥२७॥ अष्टांशाद्धिमवाञ्छैल आयतः पूर्वपश्चिमे ॥ द्वीपस्य मण्डलीभावाद्ध्रासवृद्धी प्रकीर्त्यते ॥ २८ ॥ वर्षाणां पर्वतानां च यथा चेमे तथोत्तरम् ॥ तेषां मध्ये जनपदास्तानि वर्षाणि चैव तत् ॥ २९ ॥ प्रपातविषमैस्तैस्तु पर्वतैरावृतानि तु ॥ सन्ततानि नदीभेदैरगम्यानि परस्परम् ॥ ३० ॥ वसन्ति तेषु सत्त्वानि नानाजातीनि सर्वशः ॥ एतद्धैमवतं वर्षं भारती यत्र सन्ततिः ॥ ३१ ॥ हेमकूटे परं यत्र नाम्ना किम्पुरुषोत्तमः ॥ हेमकूटात्तु निषधं हरिवर्षं तदुच्यते ॥ ३२ ॥ हरिवर्षात्परं चैव हेमपार्श्वे इलावृतम् ॥ इलावृतात्परं नीलं रम्यकं नाम विश्रुतम् ॥ ३३ ॥ रम्यकाच्च परं श्वेतं विश्रुतं तद्धिरण्मयम् ॥ हिरण्मयात्परं चैव शृङ्गवन्तं कुरु स्मृतम् ॥ ३४ ॥ धनुःसंस्थे तु द्वे वर्षे विज्ञेये दक्षिणोत्तरे ॥ द्वीपानां खलु चत्वारि चतुरस्रमिलावृतम् ॥ ३५ ॥ अर्वाक् च निषधस्याथ वेद्यर्द्धं दक्षिणं स्मृतम् ॥ परं शृङ्गवतो यच्च वेद्यर्द्धं हि तदुत्तरम् ॥ ३६ ॥ वेद्यर्द्धे दक्षिणे त्रीणि वर्षाणि त्रीणि चोत्तरे ॥ तयोर्मध्ये तु विज्ञेयो यत्र मेरुस्त्विलावृतः ॥ ३७ ॥ आयामतश्चतुस्त्रिंशत्सहस्राणि प्रकीर्त्तितः ॥ तस्य प्रतीच्यां विज्ञेयः पर्वतो गन्धमादनः ॥ ३८ ॥ आयामोच्छ्रायविस्तारात्तुल्यो माल्यवता तु सः ॥ परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्वतः ॥३९॥ चतुर्वर्णः स सौवर्णश्चतुरस्रः समुत्थितः ॥ अव्यक्तधातवः सर्वे समुत्पन्ना जनादयः ॥ ४० ॥ अव्यक्त

पृथिवी पद्मं मेरुस्तस्य च कर्णिका ॥ चतुष्पत्रं समुत्पन्नं व्यक्तं पंचगुणं महत् ॥ ४१ ॥ ततः सर्वाः समुत्पन्ना वितता हि प्रवृत्तयः ॥ अनेक
कल्पजीवाद्भिः पुरुषैः पुण्यकारिभिः ॥ ४२ ॥ कृतात्माभिर्महात्माभिः प्राप्यते पुरुषोत्तमः ॥ महायोगी महादेवो जगद्धयेयो जनार्दनः ॥४३॥
सर्वलोकगतोऽनन्तो व्यापको मूर्त्तिरव्ययः ॥ न तस्य प्राकृता मूर्त्तिर्मांसमेदोऽस्थिसम्भवा ॥ ४४ ॥ योगित्वाच्चेश्वरत्वाच्च सर्वरूपधरो विभुः ॥
तन्निमित्तं समुत्पन्नं लोके पद्मं सनातनम् ॥ ४५ ॥ कल्पशेषस्य तस्यासो कालस्य गतिरीदृशी ॥ तस्मिन्पद्मे समुत्पन्नो देवदेवश्चतु
र्मुखः ॥ ४६ ॥ प्रजापातिपातिर्देव ईशानो जगतः प्रभुः ॥ तस्य बीजनिसर्गं हि पुष्करस्य यथार्थवत् ॥ ४७ ॥ कृत्स्नं प्रजानिसर्गेण विस्त
रेणैव वर्ण्यते ॥ तदम्बु वैष्णवः कायो यतो रत्नविभूषितः ॥ ४८ ॥ पद्माकारा समुत्पन्ना पृथिवी सवनहृदा ॥ तत्तस्य लोकपद्मस्य विस्तरं
सिद्धभाषितम् ॥ ४९ ॥ वर्ण्यमानं विभागेन क्रमशः शृणुत द्विजाः ॥ महावर्षाणि ख्यातानि चत्वार्यत्र च संस्थिताः ॥ ५० ॥ तत्र पर्वत
संस्थानो मेरुर्नाम महाबलः ॥ नानावर्णः स पार्श्वेषु पूर्वतः श्वेत उच्यते ॥ ५१ ॥ पीतं च दक्षिणे तस्य भृङ्गवर्णं तु पश्चिमम् ॥ उत्तरं रक्तवर्णं तु तस्य
पार्श्वं महात्मनः ॥ ५२ ॥ मेरुस्तु शोभते शुक्लो राजवंशेष्वधिष्ठितः ॥ तरुणादित्यसङ्काशो विधूम इव पावकः ॥ ५३ ॥ योजनानां सहस्राणि चतुरशीति
समुच्छ्रितः ॥ प्रविष्टः षोडशाधस्ताद्विस्तृतः षोडशैव तु ॥ ५४ ॥ शरावसंस्थितत्वाच्च द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥ विस्तारात्त्रिगुणश्चास्य परिणाहः सम
न्ततः ॥ ५५ ॥ मण्डलेन प्रमाणेन व्यस्यमानं तदिष्यते ॥ नवतिश्च सहस्राणि योजनानां समन्ततः ॥ ५६ ॥ ततः षट्काधिकानां च व्यस्यमानं प्रकीर्त्ति
तम् ॥ चतुरस्रेण मानेन परिणाहः समन्ततः ॥ ५७ ॥ स पर्वतो महादिव्यो दिव्यौषधिसमन्वितः ॥ भवनैरावृतः सर्वैर्जातरूपमयैः शुभैः ॥ ५८ ॥ तत्र देव
गणाः सर्वे गन्धर्वोरगराक्षसाः ॥ शैलराजे प्रमोदन्ते तथैवाप्सरसां गणाः ॥ ५९ ॥ स तु मेरुः परिवृतो भवनैर्भूतभावनैः ॥ चत्वारो यस्य देशास्तु नाना
पार्श्वेष्वधिष्ठिताः ॥ ६० ॥ भद्राश्वो भारतश्चैव केतुमालश्च पश्चिमे ॥ उत्तरे कुरवश्चैव कृतपुण्यप्रतिश्रयाः ॥ ६१ ॥ कर्णिका तस्य पद्मस्य समन्तात्
परिमण्डलम् ॥ योजनानां सहस्राणि योजनानां प्रमाणतः ॥ ६२ ॥ तस्य केसरजालानि नव षट् च प्रकीर्त्तिताः ॥ चतुरशीतिरुत्सेधो विवरान्तर
गोचराः ॥ ६३ ॥ त्रिंशच्चापि सहस्राणि योजनानां प्रमाणतः ॥ तस्य केसरजालानि विकीर्णानि समन्ततः ॥ ६४ ॥ शतसाहस्र आयामः

अशीतिः पृथुलानि च ॥ चत्वारि तत्र पर्वाणि योजनानां चतुर्दश ॥ ६५ ॥ तत्र या सा मया तुभ्यं कर्णिकेत्यभिविश्रुता ॥ तां वर्ण्यमाना
मे काश्यात्समासेन निबोधत ॥ ६६॥ मणिपर्णशतैश्चित्रां नानावर्णप्रभासिताम् ॥ अनेकपर्णनिचयं सौवर्णमरुणप्रभम् ॥ ६७ ॥ कान्तं सहस्र
पर्वाणं सहस्रोदरकन्दरम् ॥ सहस्रशतपत्रं च वृतमेकं नगोत्तमम् ॥६८॥ मणिरत्नार्पितैः श्वभ्रैर्मणिचित्रिततोरणैः ॥ तत्र ब्रह्मसभा रम्या ब्रह्मर्षि
जनसङ्कुला ॥ ६९ ॥ नाम्ना मनोवती सा तु सर्वलोकेषु विश्रुता ॥ तत्रेशानस्य देवस्य सहस्रादित्यवर्चसः ॥ ७० ॥ महाविमानसंस्थस्य
महिमा वर्त्तते सदा ॥ तत्र सर्वे देवगणाश्चतुर्वक्त्रं स्वयं प्रभुम् ॥ ७१ ॥ इष्ट्वा पूज्य नमस्कारैरर्चनीयमुपस्थिताः ॥ येस्तदा जितसङ्कल्पैर्ब्रह्म
चर्य-महात्मभिः ॥ ७२ ॥ चीर्णं चारुमनोभिश्च सदाचारपरिस्थितैः ॥ सम्यग्भक्त्या सुतुष्ट्या च पितृदेवार्चने.रताः ॥ ७३ ॥ गृहाश्रमपरा
स्तत्र विनीता अतिथिप्रियाः ॥ गृहिणः शुक्लकर्मस्था विरक्ताः कारणात्मकाः ॥ ७४ ॥ यमैर्नियमदानैश्च दृढनिर्दग्धकिल्बिषाः ॥ तेषां
निवासः शुक्ले च ब्रह्मलोके ह्यनिन्दिते ॥ ७५ ॥ उपर्युपरि सर्वासां गतीनां परमा गतिः ॥ चतुर्दशसहस्राणि योजनानां तु कीर्त्तितम् ॥ ७६ ॥
तथोर्द्धरुचिरे कृष्णे तरुणादित्यवर्चसि ॥ महागिरौ ततो रम्ये रत्नधातुविचित्रिते ॥ ७७ ॥ नेकरत्नसमावासे मणितोरणमन्दिरे ॥ मेरुः सर्वेषु
पार्श्वेषु समन्तात्परिमण्डले ॥ ७८ ॥ त्रिंशद्योजनसाहस्रं चक्रपादो नगोत्तमः ॥ दशयोजनविस्तीर्णा चक्रपादोपनिर्गता ॥ ७९ ॥ सा तूर्द्ध
वाहिनी चापि नदी भूमौ प्रतिष्ठिता ॥ सा पुर्याममरावत्यां क्रममाणेन्दुसप्रभा ॥ ८० ॥ तया तिरस्कृता वापि सूर्येन्दुर्ज्योतिषां गणाः ॥ उद
यास्तमिते सन्ध्ये ये सेवन्ते द्विजोत्तमाः ॥ ८१ ॥ तान्तुष्यन्ते द्विजाः सर्वानष्टावप्यचलोत्तमान् ॥ परिभ्रमज्ज्योतिषां या सा रुद्रेन्द्रमता
शुभा ॥ ८२ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे जम्बूद्वीपमेरुनिरूपणं नाम पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ अथाष्टदिक्पाल
पुर्यः ॥ रुद्र उवाच ॥ तस्यैव मेरोः पूर्वे तु देशे परमवर्चसे ॥ चक्रपादपरिक्षिप्ते नानाधातुविराजिते ॥ १ ॥ तत्र सर्वामरपुरं चक्रपादसमुद्ध
तम् ॥ दुर्धर्षबलदृप्तानां देवदानवरक्षसाम् ॥ २ ॥ तत्र जाम्बूनदमयः सुप्राकारः सुतोरणः ॥ तस्याप्युत्तरपूर्वे तु देशे परमवर्चसे ॥ ३ ॥
अलोकजनसम्पूर्णा विमानशतसङ्कुला ॥ महावापीसमायुक्ता नित्यं प्रमुदिता शुभा ॥ ४ ॥ शोभिता पुष्पशबलैः पताकाध्वजमालिनी ॥ देवै

यक्षोऽप्सरोभिश्च ऋषिभिश्च सुशोभिता ॥५॥ पुरन्दरपुरी रम्या समृद्धा त्वमरावती ॥ तस्या मध्येऽमरावत्या वज्रवैदूर्यवेदिका ॥६॥ त्रैलोक्ये गुणविख्याता सुधर्मा नाम वै सभा ॥ तत्रास्ते श्रीपतेः श्रीमान्सहस्राक्षः शचीपतिः ॥ ७ ॥ सिद्धादिभिः परिवृतः सर्वाभिर्देवयोनिभिः ॥ तत्र चैव तु वंशः स्याद्भास्करस्य महात्मनः ॥ ८ ॥ साक्षात्तत्र सुराध्यक्षः सर्वदेवनमस्कृतः ॥ तस्याश्च दिक्षु विस्तीर्णा तत्तद्गुणसमन्विता ॥ ९ ॥ तेजोवती नाम पुरी हुताशस्य महात्मनः ॥ तद्वद्गुणवती रम्या पुरी वैवस्वतस्य च ॥ १० ॥ नाम्ना संयमनी नाम पुरी त्रैलोक्यविश्रुता ॥ तथा चतुर्थे दिग्भागे नैर्ऋताधिपतेः श्रुता ॥ ११ ॥ नाम्ना कृष्णवती नाम विरूपाक्षस्य धीमतः ॥ पंचमे ह्युत्तरपुटे नाम्ना शुद्धवती पुरी ॥ १२ ॥ उदकाधिपतेः ख्याता वरुणस्य महात्मनः ॥ तथा पंचोत्तरे देवस्यास्योत्तरपुटे पुरी ॥ १३ ॥ वायोर्गन्धवती नाम ख्याता सर्वगुणोत्तरा ॥ तस्योत्तरपुटे रम्या गुह्यकाधिपतेः पुरी ॥ १४ ॥ नाम्ना महोदया नाम शुभा वैदूर्यवेदिका ॥ तथाष्टमेऽन्तरपुटे ईशानस्य महात्मनः ॥ १५ ॥ पुरी मनोहरा नाम भूतैर्नानाविधैर्युता ॥ पुष्पैर्धर्म्यैश्च विविधैर्वनैराश्रमसंस्थितैः ॥ प्रार्थ्यते देवलोकोऽयं स स्वर्ग इति कीर्त्तिनः ॥ १६ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशेऽष्टदिक्पालपुरीनिरूपणं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ अथ मेरुवर्णनम् ॥ रुद्र उवाच ॥ यदेतत्कर्णिकामूलं मेरोर्मध्यं प्रकीर्त्तितम् ॥ तद्योजनसहस्राणि संख्यया मानतः स्मृतम् ॥ १ ॥ चत्वारिंशत्तथा चाष्टौ सहस्राणि तु मण्डलैः ॥ शैलराजस्य तत्तत्र मेरुमूलमिति स्मृतम् ॥ २ ॥ तेषां गिरिसहस्राणामनेकानां महोच्छ्रयः ॥ दिगष्टौ च पुनस्तस्य मर्यादापर्वताः शुभाः ॥ ३ ॥ जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ ॥ मर्यादापर्वतानेतानष्टावाहुर्मनीषिणः ॥ ४ ॥ योऽसौ मेरुर्द्विजश्रेष्ठाः प्रोक्तः कनकपर्वतः ॥ दिक्स्थानस्य तु वक्ष्यामि शृणुध्वं गदतस्ततः ॥ ५॥ मर्यादायास्तु चत्वारो मेरोरग्रं चतुर्दश ॥ येनाचचाल विष्टब्धा सप्तद्वीपवती मही ॥ ६ ॥ दशयोजनसाहस्रं व्यायामस्तेषु शङ्क्यते ॥ तिर्यगूर्द्ध्वं च रचिता हरितालतलैर्वृता ॥ ७ ॥ मनःशिलादरीभिश्च सुवर्णमणिचित्रिता ॥ अनेकसिद्धभवनैः क्रीडास्थानैश्च सप्रभा ॥ ८ ॥ पूर्वेण मन्दरस्तस्य दक्षिणे गन्धमादनः ॥ विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः ॥ ९ ॥ तेषां शृङ्गेषु चत्वारो महावृक्षाः प्रतिष्ठिताः ॥ देवदैत्याप्सरोभिश्च सेविताः सुसमृद्धिभिः ॥ १० ॥ मन्दरस्य गिरेः शृङ्गे

कदम्बो नाम पादपः ॥ प्रलम्बशाखाशिखरः कदम्बश्चैव पादपः ॥ ११ ॥ महाकुम्भप्रमाणैश्च पुष्पैर्विकचकेसरैः ॥ महागन्धमनोज्ञैश्च
शोभितः सर्वकालजः ॥ १२॥ समसेनापरिवृतो भुवनैर्भूतभावनैः ॥ सहस्रमाधिकं सोऽथ गन्धेनापूरयन्दिशः ॥१३॥ भद्राश्वो नाम वृक्षोऽयं
वर्षाद्रिः केतुसम्भवः ॥ कीर्त्तिमान् रूपवाञ्छ्रीमान्महापादपपादपः ॥ १४॥ यत्र साक्षाद्धृषीकेशः सिद्धमन्त्रैर्निषेवितः ॥ तस्य लोकसहस्रस्य
तथा स्वयदनो हरिः ॥ १५ ॥ पृष्टवांश्चामरश्रेष्ठः स हि सानुं पुनः पुनः ॥ तेन चालोकितं वर्षं सर्वद्विपदनायकः ॥ यस्य नाम्ना समाख्यातो
भद्राश्वेति न संशयः ॥ १६॥ दक्षिणस्यापि शैलस्य शिखरे द्वे च सेविते ॥ जम्बूसङ्घः पुष्पफलमहाशाखोपशोभितः ॥ १७॥ सदा ह्यतिसना
मानि स्वादूनि सुरभीणि च॥फलान्यमृतकल्पानि पतन्ति गिरिमूर्धनि॥१८॥तस्माद्गिरिवरश्रेष्ठात्फलप्रस्तरवाहिनीः॥तत्र जाम्बूनदं नाम सुवर्ण
मनलप्रभम् ॥ १९ ॥ देवालङ्कारमतुलमातिसुन्दरवर्चसम् ॥ देवदानवगन्धर्वयक्षराक्षसगुह्यकाः ॥ २० ॥ पिबन्त्यमृतकल्पं च प्रीत्या जम्बू
फलासवम् ॥ मोक्षते दक्षिणे वर्षं जम्बूलोकेति विश्रुता ॥ २१ ॥ यस्या नाम्ना समाख्यता जम्बूद्वीपेति मानवैः ॥ विपुलस्य च शैलस्य
दक्षिणेन महात्मनः ॥ २२ ॥ जातिशृङ्गोऽतिसुमहानश्वत्थश्चेति पादपः ॥ महोच्छ्रायो महास्कन्धो नैकसत्त्वगुणालयः ॥ २३ ॥ कुम्भ
प्रमाणै रुचिरैः फलैः सर्वर्तुकैः शुभैः ॥ सकेतुकेतुमालाक्य देवगन्धर्वसेवितैः ॥ २४ ॥ केतुमालेति यः ख्यातो नाम्ना तत्र प्रकीर्तितः ॥ तन्नि
बोधत विप्रेन्द्रा निरुक्तं तेन वर्षके ॥ २५ ॥ क्षीरोदमथने वृत्ते माला स्कन्धनिषेविनाम् ॥ इन्द्रेण चैत्यकेतोश्च केतुमालस्ततः स्मृतः ॥२६ ॥
तेन तच्चिह्नितं वर्षं केतुमालेति विश्रुतम् ॥ सुपार्श्वस्योत्तरे शृङ्गे वटो नाम महाद्रुमः ॥ २७ ॥ न्यग्रोधो विपुलस्कन्धो यत्रियोजनमण्डलः ॥
माल्यमानः कलापैश्च विविधैस्तु समन्ततः ॥२८॥ शाखाभिर्लम्बमानाभिः सेविते सिद्धसेविते ॥ प्रलम्बकुम्भसदृशैर्हेमवर्णफलैः सदा ॥ २९॥
सद्यस्ते वै ततस्तस्मिन्वटवृक्षप्रकाशकाः ॥ सनत्कुमारावरजा मानसा ब्रह्मणः सुताः ॥ ३० ॥ सप्त तत्र महाभागाः कुरवो नाम विश्रुताः ॥
तत्र स्थिरगतैः शान्तैर्नीरजस्कैर्महात्माभिः॥३१॥ अब्दैः स्वपक्षपर्यन्तैः संप्राप्तास्ते सनातनाः॥तस्य नामाङ्कितं वर्षं सततैर्वै महात्मनः ॥३२॥
दिवि देवे च विख्याता भर्त्तारः कुरवः सदा ॥३३॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे मेरुवर्णनं नाम सप्तसप्ततितमोऽध्यायः ॥७७॥

अथ मन्दरादिपर्वतचतुष्टयवर्णनम् ॥ रुद्र उवाच ॥ तथा चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमम् ॥ अनुविन्ध्यानि रम्याणि विहङ्गैः कूजि
तानि च ॥ १ ॥ अकेनपाक्षियुक्तात्मशृङ्गाणि सुबहूनि च ॥ देवानां दिव्यनारीभिः समं क्रीडामयानि च ॥ २ ॥ किन्नरोहितघुष्टानि शीत
मन्दसुगन्धिभिः ॥ पवनैः सेव्यमानानि रमणीयतराणि च ॥३॥ चतुर्दिक्षु विराजन्ते नामतः शृणु ता नदीः॥ पूर्वे चैत्ररथं नाम दक्षिणे गन्ध
मादनम् ॥ ४ ॥ प्रभावेण सुतोयानि नवखण्डयुतानि च ॥ वनषण्डास्तथाक्रम्य देवता ललनायुताः ॥ ५ ॥ यत्र क्रीडन्ति चोद्देशे मुदा
परमया युताः ॥ रत्नौघकीर्णतीर्थानि महापुण्यजलानि च ॥ ६ ॥ अनेकजलयन्त्रैश्च नादितानि महान्ति च ॥ शाखाभिर्लम्बमानाभिरुपक्षित
कुलालिभिः॥७॥ कमलोत्पलकह्लारशोभितानि सरांसि च ॥ चतुर्षु तेषु गिरिषु नानागुणयुतेषु च ॥ ८ ॥ अरुणोदं तु पूर्वेण दक्षिणे मानसं
स्थितम्॥ असितोदं पश्चिमे च महाभद्रं तथोत्तरे॥९॥ कुमुदैः श्वेतकपिलैः कडारैर्भूषितानि च ॥ अरुणोदस्य ये शैलाः प्राच्या वै नामतः
स्मृताः ॥ १० ॥ तान्कीर्त्यमानांस्तत्त्वेन शृणुध्वं गदतो मम ॥ विकङ्को मणिशृङ्गश्च सुपात्रश्चोपलो महान् ॥ ११ ॥ महानीलोऽथ कुम्भश्च
सुबिन्दुर्मदनस्तथा ॥ वेणुनद्धः सुमेदाश्च निषधो देवपर्वतः ॥ १२ ॥ इत्येते पर्वतवराः पुण्याश्च गिरयोऽपि च ॥ सरसो मानसस्येह दक्षिणेन
महाचलाः ॥ १३ ॥ ये कीर्त्तिता मया तुभ्यं नामतस्तान्निबोध मे ॥ शैलस्त्रिशिखरश्चैव शिशिरश्चाचलोत्तमः ॥ १४ ॥ कपिश्च शतमक्षश्च
तुरगश्चैव सानुमान् ॥ ताम्राहश्च विषश्चैव तथा श्वेतोदनो गिरिः ॥ १५ ॥ समूलश्चैव सरलो रत्नकेतुश्च पर्वतः ॥ एकमूलो महाशृङ्गो गज
मूलोऽपि शावकः ॥ १६ ॥ पंचशैलश्च कैलासो हिमवानचलोत्तमः ॥ उत्तरा ये महाशैलास्तान्वक्ष्यामि निबोधत ॥ १७ ॥ कपिलः पिङ्गलो
भद्रः सरसश्च महाचलः ॥ कुमुदो मधुमांश्चैव गर्जनो मर्कटस्तथा ॥१८॥ कृष्णश्च पाण्डवश्चैव सहस्रशिरसस्तथा ॥ पारियात्रश्च शैलेन्द्रः शृङ्ग
वानचलोत्तमः ॥ १९ ॥ इत्येते पर्वतवराः श्रीमन्तः पश्चिमे स्मृताः ॥ महाभद्रस्य सरस उत्तरेण द्विजोत्तमाः ॥ २० ॥ ये पर्वता स्थिता
विप्रास्तान्वक्ष्यामि निबोधत ॥ हंसकूटो महाशैलो वृषहंसश्च पर्वतः ॥२१॥ कपिञ्जलश्च शैलेन्द्र इन्द्रशैलश्च सानुमान् ॥ नीलः कनकशृङ्गश्च
शतशृङ्गश्च पर्वतः ॥२२॥ पुष्करो मेघशैलोथ विराजश्चाचलोत्तमः ॥ जारुचिश्चैव शैलेन्द्र इत्येते उत्तराः स्मृताः ॥२३॥ इत्येतेषां तु मुख्याना

॥६२॥

मुत्तरेषु यथाक्रमम् ॥ स्थलीर्नगरद्रोणीश्च सरांसि च निबोधत ॥ २४ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे मन्दरादिपर्वतचतुष्टयवर्णनं नाम अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ अथ मेरोर्द्रोणीनां निरूपणम् ॥ रुद्र उवाच ॥ सीतान्तस्याचलेन्द्रस्य कुमुदस्यान्तरेण च ॥ द्रोण्यां विहङ्गजुष्टायां नानासत्त्वनिषेविताम् ॥ १ ॥ त्रियोजनशतायामां शतयोजनविस्तृताम् ॥ सुरसामलपानीयां रम्यां तत्र सुरोचनीम् ॥ २ ॥ द्रोणमात्रप्रमाणैश्च पुण्डरीकैः सुगन्धिभिः ॥ सहस्रशतपत्रैश्च महापद्मैरलङ्कृतम् ॥ ३ ॥ देवदानवगन्धर्वैर्महासर्पैरधिष्ठितम् ॥ पुण्यं तच्छ्रीसरो नाम सप्रकाशमिहैव च ॥ ४ ॥ प्रसन्नसलिलैः पूर्णं शरण्यं सर्वदेहिनाम् ॥ तत्र त्वेकं महापद्मं मध्ये पद्मवनस्य च ॥ ५ ॥ कोटिपत्रप्रकलितं तरुणादित्यवर्चसम् ॥ नित्यं व्याकोचमधुरं चरत्वादतिमण्डलम् ॥ ६ ॥ चारुकेसरजालाढ्यं मत्तभ्रमरनादितम् ॥ तस्मिन्मध्ये भगवती साक्षाच्छ्री नित्यमेव हि ॥ ७ ॥ लक्ष्मीस्तु तं तदावासं मूर्तिमन्तं न संशयः ॥ सरसस्तस्य तीरे तु तस्मिन्सिद्धनिषेवितम् ॥ ८ ॥ सदा पुष्पफलं रम्यं तत्र बिल्ववनं महत् ॥ शतयोजनविस्तीर्णं द्वियोजनशतायतम् ॥ ९ ॥ अर्द्धक्रोशोच्चशिखरैर्महावृक्षैः समन्ततः ॥ शाखासहस्रकलितैर्महास्कन्धैः समाकुलम् ॥ १० ॥ फलैः सहस्रसङ्काशैर्हरितैः पाण्डुरैस्तथा ॥ अमृतस्वादुसदृशैर्भेरीमात्रैः सुगन्धिभिः ॥ ११ ॥ शीर्यद्भिश्च पतद्भिश्च कीर्णभूमिवनान्तरम् ॥ नाम्ना तच्छ्रीवनं नाम सर्वलोकेषु विश्रुतम् ॥ १२ ॥ देवादिभिः समाकीर्णमष्टाभिः ककुभिः शुभम् ॥ बिल्वाशिभिश्च मुनिभिः सेवितं पुण्यकारिभिः ॥ १३ ॥ तत्र श्रीः संस्थिता नित्यं सिद्धसङ्घनिषेविता ॥ एकैकस्याचलेन्द्रस्य मणिशैलस्य चान्तरम् ॥ १४ ॥ शतयोजनविस्तीर्णं द्वियोजनशतायतम् ॥ विमलं पङ्कजवनं सिद्धचारणसेवितम् ॥ १५ ॥ पुष्पं लक्ष्म्या धृतं भाति नित्यं प्रज्वलतीव ह ॥ अर्द्धक्रोशं च शिखरैर्महास्कन्धैः समावृतम् ॥ १६ ॥ प्रफुल्लशाखाशिखरं पिञ्जरं भाति तद्वनम् ॥ द्विबाहुपरिणाहस्तैस्त्रिहस्तायामविस्तृतैः ॥ १७ ॥ मनःशिलापूर्वनिभैः पाण्डुकेसरशालिभिः ॥ पुष्पैर्मनोहरैर्व्याप्तं व्याकोचैर्गन्धशालिभिः ॥ १८ ॥ विराजते वनं सर्वं मत्तभ्रमरनादितम् ॥ तद्वनं दानवैर्देवैर्गन्धर्वैर्यक्षराक्षसैः ॥ १९ ॥ किन्नरैरप्सरोभिश्च महाभोगैश्च सेवितम् ॥ तत्राश्रमो भगवतः कश्यपस्य प्रजापतेः ॥ २० ॥ सिद्धसाधुगणाकीर्णं नानाश्रमसमाकुलम् ॥ महानीलस्य मध्ये तु ककुभस्य गिरे

स्तथा ॥ २१ ॥ मध्ये सुखा नदी नाम तस्यास्तीरे महद्वनम् ॥ पञ्चाशद्योजनायामं त्रिंशद्योजनमण्डलम् ॥ २२ ॥ रम्यं तालवनं श्रीमत्
क्रोशार्द्धोच्छ्रितपादपम् ॥ महाबलैर्महासारैः स्थिरैरविचलैः शुभैः ॥ २३ ॥ महदञ्जनसंस्थानैः परिवृत्तैर्महाफलैः ॥ मृष्टगन्धगुणोपेतैरुपेतं
सिद्धसेवितम् ॥ २४ ॥ ऐरावतस्य करिणस्तत्रैव सुमहाकृतिः ॥ ऐरावतस्य रुद्रस्य देवशैलस्य चान्तरे ॥ २५ ॥ सहस्रयोजनायामः शत
योजनविस्तृतः ॥ सर्वा ह्येकशिला भूमिर्वृक्षवीरुधवर्ज्जिता॥२६॥आप्लुता पादमात्रेण सलिलेन समन्ततः॥इत्येता अन्तरे द्रोण्यो नानाकाराः
प्रकीर्त्तिताः ॥ [illegible] ॥ मेरोः पार्श्वेन विप्रेन्द्रा यथावदनुपूर्वशः ॥ २८ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे मेरुद्रोणीनां निरूपणं
नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ अथ मेरोर्द्रोण्यादिवर्णनम् ॥ रुद्र उवाच ॥ अथ दक्षिणदिग्व्यवस्थिताः पर्वतद्रोण्यः सिद्धचरिताः
कीर्त्यन्ते ॥ शिशिरपतङ्गयोर्मध्ये शुक्ला भूमिः त्रिया मुक्ता गलितपादपा ॥ इक्षुक्षेपे च शिखरे पादैरुपशोभिते ॥ उदुम्बरवनं रम्यं पक्षि
सङ्घनिषेवितम्॥१॥ फलितं तद्वनं भाति महाकूर्मोपमैः फलैः ॥ तद्वनं देवयोन्योऽष्टौ सेवन्ते सर्व एव हि ॥२ ॥ तत्र प्रसन्नस्वादुसलिला बहू
दका नद्यो वहन्ति॥ तत्राश्रमो भगवतः कर्दमस्य प्रजापतेः नानामुनिजनाकीर्णस्तच्चशतयोजनमेकं परिमण्डलं वनं च ॥ तथा च ताम्राभस्य
शैलस्य पतङ्गस्य चान्तरे शतयोजनाविस्तीर्णं द्विगुणायतं बालार्कसदृशराजीवपुण्डरीकैः समन्ततः सहस्रपत्रैरविरलैरलंकृतं महत्सरोऽनेकगन्ध
सिद्धगन्धर्वाध्युषितम्॥३॥तस्य च मध्ये महाशिखरः शतयोजनायामस्त्रिंशद्योजनविस्तीर्णोऽनेकधातुरत्नभूषितः।तस्य चोपरि महती रथ्या रत्न
प्राकारस्तोरणा॥तस्यां महद्विद्याधरपुरम्॥तत्र पुलोमनामा विद्याधरराजःशतसहस्रपरीवारः॥तथाच॥विशाखाचलेन्द्रस्य श्वेतस्य चान्तरे सरः॥
तस्य च पूर्वतीरे महदाम्रवनं कनकसङ्काशैः फलैरतिसुगन्धिभिर्महाकुम्भमात्रैः सर्वतश्चितम्॥देवगन्धर्वादयश्च तत्र निवसन्ति ॥४॥सुमूलस्या
चलेन्द्रस्य वसुधारस्य चान्तरे॥त्रिंशद्योजनविस्तीर्णे पञ्चाशद्योजनायते॥५॥ बिल्वस्थली नाम तत्र फलानि महाकुम्भसङ्काशानि तैश्च पतद्भिः
स्थलमृत्तिका क्लिन्ना तां च स्थलीं गुह्यकादयः सेवन्ते बिल्वफलाशिनः॥तथा च वसुधाररत्नधारयोर्मध्ये त्रिंशद्योजनविस्तीर्णं शतयोजनायतं
सुगन्धि किंशुकवनं सदा कुसुमचयस्य गन्धेन वासयते योजनशतम् ॥ तच्च सिद्धाध्युषितं जलोपेतञ्च ॥६ ॥ तत्र चादित्यस्य देवस्य महदा

यतनम् ॥ स मासे मासे भगवानवतराति सूर्यः ॥ प्रजापतिं लोकजनकं देवादयो नमस्यन्ति ॥ तथा च पञ्चकूटस्य कैलासस्य चान्तरे सहस्र
योजनायामं विस्तीर्णं शतयोजनं हंसपाण्डुरं क्षुद्रसत्त्वैरनाधृष्यं स्वर्गसोपानमिव भूमण्डलम् ॥ ७ ॥ अथ पश्चिमे दिग्भागे व्यवस्थिता गिरि
द्रोण्यः कीर्त्यन्ते ॥ सुपार्श्वशिखिशैलयोर्मध्ये समन्ताद्योजनशतमेकं भौमशिलातलं नित्यतप्तं दुस्पर्शं तस्य मध्ये त्रिंशद्योजनविस्तीर्णं
मण्डलं वह्निस्थानम् । स च सर्वकालमनिन्धनो भगवाँल्लोकक्षयकारी संवर्त्तको ज्वलते॥ अन्तरे च शैलवरयोः कुमुदाञ्जनयोः शतयोजनविस्तीर्णा
मातुलुङ्गस्थली सर्वसत्त्वानामगम्या पीतवर्णैः फलैरावृता सा स्थला शोभते ॥ तत्र च पुण्यो ह्रदः सिद्धैरुपेतः ॥ बृहस्पतेस्तद्वनम्॥ तथा च
शैलयोः पिञ्जरगौरयोरन्तरे सरोद्रोण्यो ह्यनेकशतयोजनायताः ॥ महद्भिश्च षट्पदोद्घुष्टैः कुमुदैरुपशोभिताः ॥ ८ ॥ तत्र च भगवतो विष्णोः
परमेश्वरस्यायतनम् ॥ तथा च शुक्लपाण्डुरयोरपि महागिर्योरन्तरे त्रिंशद्योजनविस्तीर्णो नवत्यायत एकशिलोद्देशो वृक्षविवर्ज्जितः ॥ तत्र च
निष्कम्पा दीर्घिका सवृक्षा स्थलपद्मिनी अनेकजातिजैश्च पद्मैः शोभिता ॥ तस्याश्च मध्ये पञ्चयोजनप्रमाणो न्यग्रोधो वृक्षः ॥ तस्मिंश्चन्द्रशेख
रोमापतिर्नीलवासाश्च देवो निवसति यक्षादिभिरीड्यमानः॥ सहस्रशिखरस्य गिरेः कुमुदस्य चान्तरे वर्त्तमानं पञ्चाशद्योजनायामं विंशद्योजनविस्तृ
तमिक्षुक्षेपोच्चशिखरमनेकपक्षिसेवितमनेकवृक्षफलैर्मधुरसैरुपशोभितम् ॥ तत्र चन्द्रस्य महानाश्रमो दिव्याभिप्रायानिर्म्मितः ॥ तथा च शङ्ख
कूटऋषभयोर्मध्ये पुरुषस्थलीरम्याऽनेकगुणानेकयोजनायता बिल्वप्रमाणैः कङ्कोलकैः सुगन्धिभिरुपेता॥ तत्र पुरुषरसोन्मत्ताः अनेक वृक्षवल्ली
भिरुपेता नागाद्याः प्रतिवसन्ति॥ ९॥ तथा कपिञ्जलनागशैलयोरन्तरे द्विशतयोजनमायता शतयोजनविस्तीर्णा स्थली नानाजनविभूषिता द्राक्षा
खर्जूरखण्डैरुपेता सा स्थली॥ तथाच पुष्करमहामेघयोरन्तरे षष्टियोजनविस्तीर्णा शतायामा पाणितलप्रख्या महती स्थली वृक्षवीरुद्विवर्ज्जिता
तस्याश्च पार्श्वे चत्वारि महावनानि सरांसि चानेकयोजनानि ॥ दश पञ्च सप्त तथाष्टौ त्रिंशद्विंशतियोजनाः स्थलयो द्रोण्यश्च तत्र काश्चिन्म
हाघोराः पर्वतक्षयाः ॥ १० ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे मेरुस्थद्रोण्यादिवर्णनंनामाशीतितमोऽध्यायः ॥ ८० ॥ अथ
तेषु पर्वतेषु देवानामवकाशा वर्ण्यन्ते ॥ रुद्र उवाच ॥ अतः परं पर्वतान्तेषु देवानामवकाशा वर्ण्यन्ते॥ तत्र योऽसौ सीताख्यः पर्वतस्तस्योपरि

महेन्द्रस्य क्रीडास्थानम् ॥ तत्र देवराजस्य पारिजातकवृक्षवनम् ॥ तस्य पूर्वपार्श्वे कुञ्जरो नाम गिरिः ॥ तस्योपरि दानवानामष्टौ पुराणि च ॥ १ ॥ तथा वज्रके पर्वते राक्षसानामनेकानि पुराणि ॥ ते च नाम्ना नीलकाः कामरूपिणः ॥ महानीले च शैलेन्द्रे पुराणि पंचदश सहस्राणि किन्नराणां ख्यातानि ॥ तत्र देवदत्तचन्द्रादयो राजानः पंचदश किन्नराणां गर्विताः ॥ तानि सौवर्णानि बिलप्रवेश नानि च पुराणि चन्द्रोदये च पर्वतवरे नागानामधिवासः ॥ ते च बिलप्रवेशा बिलेषु वैनतेयविषयवर्तिना व्यवस्थितानुरागे च दानवेन्द्रा व्यव स्थिताः ॥ वेणुमत्यपि विद्याधरपुरत्रयं त्रिंशद्योजनशतविस्तीर्णमेकैक तावदायतम् ॥ उलूकरोमशमहावेत्रादयो राजानो विद्याधराणां च॥२॥ तत्र एकैक शैलराजनि स्वयमेव गरुडो व्यवस्थितः ॥ कुञ्जरे तु पर्वतवरे नित्यं पशुपतिर्व्यवस्थितः ॥ वसुधारे च वृषभाङ्को महादेवः शङ्करो योगिनां वरोऽनेकगणभूतकोटिसहस्रपरिवारोऽनादिपुरुषो व्यवस्थितः ॥ वसुधारे च पुष्पवतां वसूनां समवासः ॥ ३ ॥ वसुधाररत्नधारयोर्मूर्ध्नि अष्टौ सप्त च संख्यया पुराणि वसुसतर्षीणां चेति ॥ एकशृङ्गे च पर्वतोत्तम प्रजापतेः स्थानं चतुर्वक्त्रस्य ब्रह्मणः ॥ गजपर्वते च महाभूतपरि वृता स्वयमेव भगवती तिष्ठतीति ॥ ४ ॥ वसुधारे च पर्वतवरे मुनिसिद्धविद्याधराणामायतनं चतुराशीत्यं वरपुरमिह प्राकारतोरणाः ॥ तत्र चानेकपर्वता नाम गन्धर्वा युद्धशालिनो निवसन्ति ॥ तेषां चाधिपतिर्देवो राजराजेकपिङ्गलः ॥ सुरराक्षसाः पंचकूटे दानवाः शतशृङ्गे दानव यक्षाणां पुरःशतम् ॥ ५ ॥ प्रभेदकस्य पश्चिमे दले देवदानवसिद्धादिपुराणि ॥ तस्य गिरेर्मूर्ध्नि महती नाम शिला तिष्ठति । तस्यां च पर्वणि पर्वणि सोमः स्वयमेवावतरति ॥ तस्यैवोत्तरपार्श्वे त्रिकूटं नाम । तत्र ब्रह्मा तिष्ठति क्वचित्तत्र ॥ तथा च वह्न्यायतनम् ॥ मूर्त्तिमान्वह्निरुपा स्यते देवैः ॥ ६ ॥ उत्तरे च शृङ्गाख्ये पर्वतवरे देवतानामायतनानि ॥ पूर्वेण नारायणस्यायतनम् ॥ मध्ये ब्रह्मणः ॥ शङ्करस्य पश्चिमे ॥ तत्र यक्षादीनां कानिचित्पुराणि ॥ तस्य चोत्तरे तीरे जातुरुच्छमहापर्वत त्रिंशद्योजनमण्डलं नन्दजलं नाम सरः ॥ तत्र नन्दो नाम नागराजो वसति शतशीर्षप्रचण्ड इति ॥ ७ ॥ इत्येतेऽष्टौ देवपर्वता विज्ञेयाः ॥ ते चानुक्रमेण हेमरजतरत्नवैदूर्यमनःशिलादिवर्णाः ॥ इयं च पृथ्वी लक्षकोटि शतानेकसंख्याता पूर्णा तेषु च सिद्धविद्याधराणां निलयाः ॥ तद्यथा मेरोः पार्श्वतः केसरवलयालवालं सिद्धलोक इति कीर्त्त्यते ॥ इयंच पृथ्वी

पद्माकारेण व्यवस्थिता ॥ एष सर्वपुराणेषु क्रमः सामान्यतः प्रतिपाद्यते ॥ ८ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे मेरुवर्णने देशाना
मंवकाशवर्णनंनामैकाशीतितमोऽध्यायः ॥ ८१ ॥ अथ नद्यवतारः ॥ रुद्र उवाच ॥ अथ नदीनामवतारं शृणुत ॥ आकाशसमुद्रो यः
प्रोच्यते तस्मादाकाशगामिनी नदी प्रवृत्ता ॥ सा चानवरतमिन्द्रगजेन क्षोभ्यते ॥ सा च चतुरशीतिसहस्रोच्छ्रायान्मेरोरुपरि पतति ॥ सा
च मेरुकूटतटान्तेभ्यः प्रस्खलिता चतुर्द्धा सञ्जाता षष्टिसहस्रयोजनान्निरालम्बा पतमाना प्रदक्षिणमनुसरन्ती चतुर्द्धा जगाम सीता चालकनन्दा
चक्षुर्भद्रा चेतिनामभिः ॥ तासां मध्ये एकाशीतिसहस्रपर्वतान्दारयन्ती गांगता गङ्गेत्युच्यते ॥ १ ॥ अथ गन्धमादनपार्श्वेऽमरगण्डिका
वर्ण्यते ॥ एकत्रिंशद्योजनसहस्राणि आयामश्चतुःशतविस्तीर्णम् ॥ तत्र केतुमालाः सर्वे जनपदाः कृष्णवर्णाः पुरुषा महाबलिन उत्पलवर्णाः
स्त्रियः शुभदर्शनाः ॥ तत्र च महावृक्षाः पनसाः सन्ति ॥ तत्रेश्वरो ब्रह्मपुत्रस्तिष्ठति ॥ तत्रोदपानाच्च जरारोगविवर्जिता वर्षायुतायुषो जुष्टापश्च
नराः ॥ माल्यवतः पूर्वपार्श्वे पूर्वगण्डिका एकशृङ्गाद्योजनसहस्राणि मानसः ॥ ते च भद्राश्वा नाम जनपदाः ॥ २॥ भद्रसालवनं च तत्र व्यव
स्थितम् ॥ कालाम्रवृक्षाः पुरुषाः श्वेताः पद्मवर्णिनः स्त्रियः कुमुदवर्णा दशवर्षसहस्राणि तेषामायुः ॥ तत्र च पंच कुलपर्वताः ते च शैलवर्णो
माल्याख्यःकोरजस्कस्त्रिपर्णः नीलश्चेति तद्विनिर्गताः ॥ तदम्भःस्थितानां देशानां तान्येव नामानि ॥ ३ ॥ ते च देशा एता नदीः पिबन्ति ॥
तद्यथा सीता सुवाहिनी हंसवती कासा महावक्रा चन्द्रवती कावेरी सुरसाख्यावती इन्द्रवती अङ्गारवाहिनी हरित्तोया सोमावर्त्ता शतहृदा वन
माला वसुमती हंसा सुपर्णा पंचगङ्गा धनुष्मती मणिवप्रा सुब्रह्मभागा विलासिनी कृष्णतोया पुण्योदा नागवती शिवा शैवालिनी मणितटा
क्षीरोदा वरुणताली विष्णुपदी महानदीनां पयो ये पिबन्ति ते दशवर्षसहस्रायुषो रुद्रोमाभक्ता इति ॥ ४ ॥ इति श्रीव० रुद्रगीतासु भुवनकोशे
नद्यवतारनिरूपणं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ अथ नैषधस्थकुलाचल जनपदनदीवर्णनम् ॥ रुद्र उवाच ॥ निसर्ग एव भद्राश्वानां
कीर्तितो नः केतुमालानां विस्तरे कथितम् ॥ नैषधस्याचलेन्द्रस्य पश्चिमेन कुलाचलजनपदनद्यः कीर्त्यन्ते ॥ तथाच विशालकम्बलजयन्त
कृष्णहरिताशोकवर्द्धमान इत्येते सप्त कुलपर्वतानां कोटिशः प्रसूतिः ॥ तन्निवासिनो जनपदास्तन्नामान एव द्रष्टव्याः ॥ १ ॥ तद्यथा सौर

ग्रामान्तसातपः कृतसुराश्रवणकम्बलमाहेयाचल कूटवासमूलतपकौश्वकृष्णाङ्गमणिपङ्कज चूडमल सोमीय समुद्रांतक कुकुंजसुवर्णतट कुहृ
श्वेताङ्ग कृष्णपाद विद् कापिल कर्णिक महिष कुब्ज करनाट महोत्कट शुक नाक सगज भूम ककुरञ्जन महानाह किकिसपर्ण भौमक चोरक
धूमजन्माङ्गारज जीवलौकिता वाचांसहाङ्गमधुरेय शुकेय चकेय श्रवण मत्तकाशिक गोदावाम कुलपञ्जाब वर्ज्जह मोदशालका एते जनपदा
स्तत्पर्वतस्था नदीः पिबन्ति ॥ २ ॥ तद्यथा प्लाक्षा महाकदम्बा मानसी श्यामा सुमेधा बहुला विवर्णा पुङ्खा माला दर्भवती भद्रनदी शुकनदी
पल्लवा भीमा प्रभञ्जना काम्बा कुशावती दक्षा कासवती तुङ्गा पुण्योदा चन्द्रावती सुमूलावती ककुपद्मिनी विशाला करण्टका पीवरी महामाया
महिषी मानुषी चण्डा एताः नदीः प्रधानाः ॥ शेषाः क्षुद्रनद्यः सहस्रशश्चेति ॥ ३ ॥ इति श्रीवराहपुराणे रुद्रगीतासु नैषधस्थकुलाचलजन
पदनदीनिरूपणंनाम त्र्यशीतितमोऽध्यायः ॥८३॥ अथ मेरोर्दक्षिणोत्तरवर्षवर्णनम् ॥ रुद्र उवाच ॥ उत्तराणांच वर्षाणां दक्षिणानां च सर्वशः ॥
आचक्षते यथान्यायं ये ये पर्वतवासिनः ॥१॥ तच्छृणुध्वं मया विप्राः कीर्त्यमानं समाहिताः ॥ दक्षिणेन तु मेरोश्च श्वेतस्य चोत्तरेण च ॥ २ ॥
वायव्यं रम्यकं नाम जायन्ते तत्र मानवाः ॥ मतिप्रधाना विमला जरादुर्गतिवर्ज्जिताः ॥ ३ ॥ तत्रापि सुमहान्वृक्षो न्यग्रोधो रोहितः
स्मृतः ॥ तत्फलरसपानाच्च दशवर्षसहस्रिणः ॥४॥ आयुषा सर्वमनुजा जायन्ते देवरूपिणः ॥ उत्तरेण च श्वेतस्य त्रिशृङ्गस्य च दक्षिणे॥५॥
वर्षं हिरण्मयं नाम तत्र हैरण्वती नदी ॥ यक्षा वसन्ति तत्रैव बलिनः कामरूपिणः ॥ ६ ॥ एका दशसहस्राणि समानां तत्र जीवितम् ॥
शतान्यन्यानि जीव्यन्ते वर्षाणां दश पंच च ॥ ७ ॥ लकुचाः पनसा वृक्षास्तस्मिन्देशे व्यवस्थिताः ॥ तत्फलप्राशनादेव जीवन्ति बहु
वासरम् ॥ ८ ॥ तथा त्रिशृङ्गे च मणिकांचनसर्वरत्नशिखरोरुक्रमेण तस्य चोत्तरशृङ्गादाक्षिणसमुद्रान्तं चोत्तरकुरवः ॥ तत्र च क्षीरवृक्षाप्रासवाः
सन्ति तेषु वृक्षेष्वेव वस्त्राण्याभरणानि च । मणिमया भूमिः सुवर्णवालुका । तस्मिन् स्वर्गच्युताः पुरुषा वसन्ति त्रयोदशवर्षसहस्रायुषः ॥९॥
तस्यैव द्वीपस्य पश्चिमेन चतुर्योजनसहस्रमतिक्रम्य देवलोकाच्चंद्रद्वीपो भवति योजनसहस्रपरिमण्डलः ॥ तस्य मध्ये चन्द्रकान्तसूर्यकान्त
नामानौ गिरिप्रस्रवणौ । तयोर्मध्ये चंद्रावर्त्ता नाम महानदी अनेकवृक्षसमाकुलानेकनदीयुक्ता ॥ १० ॥ एतत्कुरुवर्षान्तस्योत्तरपार्श्वे समुद्रोर्मि

मालाढ्यं पंचयोजनसहस्रमतिक्रम्य देवलोकात्सूर्यद्वीपो भवति योजनसहस्रपरिमण्डलः ॥ तस्य मध्ये गिरिवरः शतयोजनविस्तीर्णस्तदु
च्छ्रितः । तस्मात्सूर्यावर्त्तनामा नदी निर्गता । तत्र च सूर्यस्याधिष्ठानम् । तत्र सूर्यदैवत्यास्तद्वर्णाश्च प्रजाः दशवर्षसहस्रायुषः ॥ ११ ॥ तस्य
च द्वीपस्य पश्चिमेन चतुर्योजनसहस्रमतिक्रम्य समुद्रदेशे योजनसाहस्रपरिमण्डलेन द्वीपो भद्राकारो नाम ॥ तत्र च भद्रासनं वायोरनेकरत्न
शोभितम् । तत्र सकलविग्रहवान्वायुस्तिष्ठति ॥ तपनीयवर्णाश्च प्रजाः पंचवर्षसहस्रायुषः ॥ १२ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवन
कोशे दक्षिणोत्तरवर्षवर्णनं नाम चतुरशीतितमोऽध्यायः॥८४॥अथ भारते नवखण्डवर्णनम् ॥ रुद्र उवाच॥ इयं भूः पद्मव्यवस्था कथिता ।
इदानीं भारतं नवभेदं शृणुत । तद्यथा । इन्द्रः कसेरुः ताम्रवर्णो गभस्तिः नागद्वीपः तथा सौम्यो गन्धर्वो वारुणो भारतं चेति ॥ सागरसंवृत
मेकैकं योजनसहस्रप्रमाणम् ॥ तत्र च सप्त कुलपर्वताः सन्ति ॥ १ ॥ तद्यथा । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ विन्ध्यश्च
पारियात्रश्च इत्येते कुलपर्वताः ॥ २ ॥ अन्ये च मन्दरशारदर्दुरकैलासमैनाकवैद्युतवारन्धमपाण्डुरतुंगप्रस्थकृष्णगिरिजयन्ते
रावतऋष्यमूकगोमन्तचित्रकूटश्रीपर्वतचकोरकुटश्रीशैलकृतस्थला इत्येते क्षुद्रपर्वताः एतेषामपि क्षुद्रतराः ॥ तेषामार्या म्लेच्छा जनपदा
वसन्ति ॥ पिबन्ति चैतासु नदीषु पानीयम् ॥ ३ ॥ तद्यथा गङ्गा सिंधुः सरस्वती शतद्रुर्वितस्ता विपाशा चन्द्रभागा
सरयूर्यमुना इरावती देविका कुहूर्गोमती धूतपापा बाहुदा दृषद्वती कौशिकी निस्वीरा गण्डकी चक्षुष्मती लोहिता इत्येता
हिमवत्पादनिर्गताः ॥ वेदस्मृतिर्वेदवती सिन्धुपर्णा चन्दनाभा नाशदाचारा रोहिपारा चर्मण्वती विदिशा वेदत्रयी वपन्ती इत्येता पारि
यात्रोद्भवाः ॥४ ॥ शोणो ज्योतीरथा नर्मदा सुरसा मन्दाकिनी दशार्णा चित्रकूटा तमसा पिप्पला करतोया पिशाचिका चित्रोत्पला विशाला
वंजुका वालुवाहिनी शुक्तिमती विरजा पङ्किनी रात्री इत्येताः ऋक्षप्रसुताः ॥ मणिजाला शुभा तापी पयोष्णी शीघ्रोदा वेण्णा पाशा वैतरणी
वैदिपाला कुमुद्वती तोया दुर्गा अन्त्या गिरा एता विन्ध्यपादोद्भवाः ॥ गोदावरी भीमरथी कृष्णा वेणी वंजुला तुंगभद्रा सुप्रयोगा बाह्या
कावेरी इत्येताः सह्यपादोद्भवाः ॥ ५ ॥ शतमाला ताम्रपर्णी पुष्पावती उत्पलावती इत्येता मलयजाः॥ त्रियामा ऋषिकुल्या इक्षुला त्रिविन्दाल

मूलिनी वंशवरा महेन्द्रतनयाः ॥ ऋषिका लूसती मन्दगामिनी पलाशिनी इत्येताः शुक्तिमत्प्रभवाः । एताः प्राधान्येन कुलपर्वतनद्यः ॥ शेषाः क्षुद्रनद्यः ॥ एष जम्बूद्वीपो योजनलक्षप्रमाणः ॥ ६ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे भारतीयनवखण्डनिरूपणं नाम पञ्चाशीतितमोऽध्यायः ॥८५॥ अथ शाकद्वीपनिरूपणम् ॥ रुद्र उवाच ॥ अतः परं शाकद्वीपं निबोधत ॥ जम्बूद्वीपस्य विस्ताराद्द्विगुणपरीणाहाल्लवणोदकश्च जम्बूद्वीपसमः ॥ तेन द्विगुणावृत्तः ॥ तत्र च पुण्याः जनपदाश्चिरात्मानः ते दुर्भिक्षजराव्याधिरहिताश्च ॥ देशेऽत्र सप्तैव कुलपर्वतास्तावत्तिष्ठन्ति तस्य चोभयतो लवणक्षीरोदधी व्यवस्थितौ ॥१॥ तत्र च प्रागायता शैलेन्द्र उदयो नाम पर्वतः तस्यापरेण जलधारो नाम गिरिः स एव चन्द्रेति कीर्त्तितः ॥ तस्य जलं च इन्द्रो गृहीत्वा वर्षति ॥ तस्यापरः श्वेतकोनाम गिरिः ॥ तस्मिन्पट्टचेति कीर्तिताः ॥ प्रजा अनेकविधाः क्रीडन्ति तस्यापरो रजतो गिरिः ॥ स एव शाको नाम्नोच्यते ॥ तस्य परेणाम्बिकेयः ॥ स च विभ्राजसो भण्यते ॥ २ ॥ स एव केसरीत्युच्यते ॥ ततो वायुः प्रवर्त्तते ॥ गिरिनामान्येव वर्षाणि ॥ तद्यथा ॥ उदयसुकुमारो जलधारक्षेमकमहाद्रुमा इति प्रधाननामानि द्वितीयपर्वतनामभिरपि वक्तव्यानि तस्य च मध्ये शाकवृक्षः तत्र च सप्त महानद्यो द्विनाम्न्यः तद्यथा सुकुमारी कुमारी नन्दा वेणिका धेनुरिक्षुमती गभिस्तिरित्येता नद्यः ॥ ३ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे शाकद्वीपनिरूपणं नाम षडशीतितमोऽध्यायः ॥८६॥ अथ कुशद्वीपवर्णनम् ॥ रुद्र उवाच ॥ अथ तृतीयं कुशद्वीपं शृणुत कुशद्वीपेन क्षीरोदः परिवृतः शाकद्वीपस्य विस्ताराद्द्विगुणेन । तत्रापि सप्त कुलपर्वताः सर्वे च द्विनामानः तद्यथा कुमुदः विद्रुमेति च उच्यते स उन्नतो हेमपर्वतः स एव द्रोणः पुष्पवान् स एव कङ्कश्च पर्वतः स एव कुशेशयोऽग्निमान् स एव तथा षष्ठो महिषनामा स एव हरिरुच्यते तत्राग्निर्वसति ॥१॥ सप्तमस्तु ककुद्मनामा स एव मन्दरः कीर्त्यते इत्येते पर्वताः कुशद्वीपे व्यवस्थिताः ॥ एतेषां वर्षभेदो भवति द्विनामसंज्ञः ॥ कुमुदस्य श्वेतमुद्भिदं तदेवादौ कीर्त्यते उन्नतस्य लोहितं वेणुमण्डलं तदेव भवति बलाहकस्य जीमूतं तदेवास्य रथाकार इति ॥ द्रोणस्य हरिं तदेव बलाधनं भवति ॥ २ ॥ तत्र द्विनाम्न्यो नद्यः प्रतोया प्रवेशा सेवोच्यते ॥ द्वितीया शिवा यशोदा सा च भवति ॥ तृतीया चित्रा नाम सैव कृष्णा भण्यते ॥ चतुर्थी ह्रादिनी नाम सैव चन्द्रा

निगद्यते ॥ विद्युल्लता पञ्चमी शुक्ला सैव वर्णा षष्ठी सैव विभावरी महती सप्तमा सैव धृतिः ॥ एताः प्रधानाः शेषाः क्षुद्रनद्यः ॥ इत्येष कुशद्वीपस्य संनिवेशः ॥ ३ ॥ शाकद्वीपोऽपि द्विगुणसन्निवेशश्च कथितः ॥ तस्य च मध्ये महाकुशस्तम्बः ॥ एष च कुशद्वीपः दधिमण्डोदेनामृतसम्मितेन क्षीरोदाद्द्विगुणेन संवृतः ॥ ४ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे कुशद्वीपवर्णनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ अथ क्रौंचद्वीपवर्णनम् ॥ रुद्र उवाच ॥ अथ क्रौंचो भवति चतुर्थः शुकद्वीपाद्द्विगुणमानतः समुद्रः क्रौंचेन द्विगुणेनावृतः ॥ तस्मिंश्च सप्तैव प्रधानपर्वताः ॥ प्रथमः क्रौंचो विद्युल्लतो रैवतो मानसः स एव पावकः तथैवान्धकारः स एवाच्छोदकः ॥ देवावृत्तो देवावृतः स च सुरापो भण्यते ॥ ततो देविष्ठः स एव काञ्चनशृङ्गो भवति ॥ १ ॥ देवनन्दात्परो गोविन्दो द्विविन्द इति ॥ ततः पुण्ड रीकः स एव तोयासहः ॥ एते सप्त रत्नमयाः पर्वताः क्रौंचद्वीपे व्यवस्थिताः सर्वे च परस्परेणोच्छ्रयाः ॥ २ ॥ तत्र वर्षाणि । तथा क्रौंचस्य कुशलो देशः स एव माधवः स्मृतो वामकस्य मनोऽनुगः स एव संवर्त्तकः ॥ तत उष्णवान् स सप्रकाशः ॥ ततः पावकः सएव सुदर्शनः ॥ तथा चान्धकारः सएव संमोहः ततो मुनिदेशः स च प्रकाशः ततो दुन्दुभिः स एवानर्थ उच्यते ॥ ३ ॥ तत्रापि सप्तैव नद्यः गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ॥ ख्यातिश्च पुण्डरीका च नद्यः सप्तविधाः स्मृताः ॥ ४ ॥ गौरी सैव पुष्पवहा कुमुद्वती नार्द्रवती रौद्रा सन्ध्या सुखावहा भोगजवा क्षिप्रोदा चाख्यातिः सैव वहुला पुण्डरीका चित्रवर्णदेशा क्षुद्रनद्यः ॥ क्रौंचद्वीपो घृताङ्केनावृतो घृतोदः ॥ शाल्मलेनेति ॥ ५ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे क्रौंचद्वीपवर्णनंनाम अष्टाशीतितमोऽध्यायः ॥ ८८ ॥ अथ शाल्मलिद्वीपवर्णनम् ॥ रुद्र उवाच ॥ त्रिषु शिष्टेषु वक्ष्यामि द्वीपेषु मनुजानथ ॥ शाल्मलिं पंचमं वर्षं प्रवक्ष्यन्तं निबोधत ॥ १ ॥ क्रौंचद्वीपस्य विस्ताराच्छाल्मलो द्विगुणो मतः ॥ २ ॥ घृतसमुद्रमावृत्य व्यवस्थितः ॥ तद्विस्तारो द्विगुणः ॥ तत्र च सप्त पर्वताः प्रधानाः ॥ तावत्यो नद्यः ॥ तत्र च पर्वताः सुमहान्पीतशातकौम्भात्सर्वगुणसौवर्णरोहितसुमनसकुशलजाम्बूनदवैद्युता इत्येते कुलपर्वताः वर्षाणि चेति ॥ ३ ॥ अथ षष्ठं गोमेदं कथ्यते ॥ शाल्मलं यथा सुरोदेनावृतं तद्वत्सुरोदोऽपि तद्द्विगुणेन गोमेदेनावृतः ॥ तत्र च प्रधानपर्वतौ द्वावेव ॥ एकश्च तावतावसरः अपरश्च कुमुद इति ॥ समुद्र इक्षु

रसस्ताद्विगुणेन पुष्करेणावृतः तत्र च पुष्कराख्ये मानसो नाम पर्वतः तदपि द्विधा च्छिन्नं वर्षं तत्प्रमाणेन च स्वादूदकेनावृतम् ॥ ४ ॥
ततश्च कटाहम् । एतत्पृथिव्याः प्रमाणम् ॥ ब्रह्माण्डस्य च सकटाहविस्तारप्रमाणम् ॥ एवंविधानां मण्डलानां परिसंख्यानं विद्यते ॥ एतानि
कल्पेकल्पे भागवान्नारायणः क्रोडरूपी रसातलान्तःप्रविष्टान्दंष्ट्रयैकयोद्धृत्य स्थितौ स्थापयति ॥ ५ ॥ एष वः कथितो मार्गो भूमेरायाम
विस्तरः ॥ स्वस्ति वोऽस्तु गमिष्यामि कैलासनिलयं द्विजाः ॥६॥ श्रीवराह उवाच ॥ एवमुक्त्वा गतो रुद्रः क्षणात्कैलासपर्वतम् ॥ ते च सर्वे
गता देवा ऋषयश्च यथागतम् ॥ ७ ॥ इति श्रीवराहपुराणे रुद्रगीतासु भुवनकोशे शाल्मलिद्वीपवर्णनंनाम ऊननवतितमोऽध्यायः ॥ ८९ ॥
अथ त्रिशक्तिगतसृष्टिमाहात्म्यम् ॥ धरण्युवाच॥परमात्मा शिवः पुण्य इति केचिद्भवं विदुः ॥ अपरे हरिमीशानमिति केचिच्चतुर्मुखम् ॥१॥
एतेषां कतमो देवः परः को वाथ वापरः ॥ एतद्देव ममाचक्ष्व परं कौतूहलं हि मे ॥ २ ॥ श्रीवराह उवाच ॥ परो नारायणो देवस्ततस्तस्मा
च्चतुर्मुखः ॥ तस्माद्रुद्रोऽभवद्देवि स च सर्वज्ञतां गतः ॥ ३ ॥ तस्याश्चर्याण्यनेकानि विविधानि वरानने ॥ शृणु सर्वाणि चार्वाङ्गि कथ्यमानं
मयानघे ॥ ४ ॥ कैलासशिखरे रम्ये नानाधातुविचित्रिते ॥ वसत्यनुदिनं देवः शूलपाणिस्त्रिलोचनः ॥ ५ ॥ सैकस्मिन्दिवसे देवः सर्वभूत
नमस्कृतः ॥ गणैः परिवृतो देव्या महानासीत्पिनाकधृक् ॥६॥ तत्र सिंहमुखाः केचिद्गणा नर्दन्ति सिंहवत् ॥ अपरे हस्तिवक्त्राश्च हयवक्त्रास्त
थापरे ॥ ७॥ अपरे शिशुमारास्या अपरे सूकराननाः ॥ अपरेऽश्वमुखा रौद्राः खरास्याजाननास्तथा ॥ ८ ॥ छागमत्स्याननाः शूरा
अनन्ताः शस्त्रपाणयः ॥ केचिद्गायन्ति नृत्यन्ति धावन्ति स्फोटयन्ति च ॥ ९ ॥ हसन्ति किलकिलायन्ति गर्जन्ति च महाबलाः ॥ केचि
ल्लोष्टांस्तु संगृह्य युयुधुर्गणनायकाः ॥१०॥ अपरे मल्लयुद्धेन युयुधुर्बलदर्पिताः ॥ एवं गणसहस्रेण वृतो देवो महेश्वरः ॥११॥ यावदास्ते स्वयं
देव्या क्रीडन्देववरः स्वयम् ॥ तावद्ब्रह्मा स्वयं देवैरुपायात्सह सत्वरः ॥ १२ ॥ तमागतमथो दृष्ट्वा पूजयित्वा विधानतः ॥ उवाच परमो देवो
रुद्रो ब्रह्माणमव्ययम् ॥ १३ ॥ किमागमनकृत्यं ते ब्रह्मन्ब्रूहि ममाचिरम् ॥ किंच देव त्वरायुक्त आगतो मम सन्निधौ ॥ १४ ॥ ब्रह्मोवाच ॥
अस्त्यन्धको महादैत्यस्तेन सर्वे दिवौकसः ॥ अर्दिता मत्समीपं तु दृष्ट्वा मां शरणैषिणः ॥ १५ ॥ ततश्चैते मया प्रोक्ताः सर्वे देवा भवं

प्रति ॥ गच्छाम इति देवेश ततस्त्वेते समागताः ॥ १६ ॥ एवमुक्त्वा स्वयं ब्रह्मा वीक्षाञ्चक्रे पिनाकिनम् ॥ नारायणं च मनसा सस्मार
परमेश्वरम् ॥ १७ ॥ ततो नारायणो देवो द्वाभ्यां मध्ये व्यवस्थितः ॥ ततस्त्वेकीकृतास्ते तु ब्रह्मविष्णुमहेश्वराः ॥ १८ ॥ परस्परं
सूक्ष्मदृष्ट्या वीक्षाञ्चक्रुर्मुदा युताः ॥ ततस्तेषां त्रिधा दृष्टिर्भूत्वैका समजायत ॥ १९ ॥ तस्यां दृष्ट्यां समुत्पन्ना कुमारी दिव्यरूपिणी ॥
नीलोत्पलदलश्यामा नीलकुंचितमूर्द्धजा ॥ २० ॥ सुनासा सुललाटान्ता सुवक्त्रा सुप्रतिष्ठिता ॥ त्वग्रा यदग्निजिह्वं तु लक्षणं परिभा
षितम् ॥ २१॥ तत्सर्वमेकतः संस्थं कन्यायां सम्प्रदृश्यते ॥ अथ तां दृश्य कन्यां तु ब्रह्मविष्णुमहेश्वराः ॥ २२ ॥ ऊचुः कासि शुभे ब्रूहि
किं वा कार्यं विपश्चिते ॥ त्रिवर्णा च कुमारी सा कृष्णा शुक्ला च पीतिका ॥ २३ ॥ उवाच भवतां दृष्टेर्योगाज्जातास्मि सत्तमाः ॥ किं
मां न वेत्थ सुश्रोणीं स्वशक्तिं परमेश्वरीम् ॥ २४ ॥ ततो ब्रह्मादयस्ते च तस्यास्तुष्टा वरं ददुः ॥ नाम्नासि त्रिकला देवी पाहि विश्वं च
सर्वदा ॥ २५ ॥ अपराण्यपि नामानि भविष्यन्ति तवानघे ॥ गुणोत्थानि महाभागे सर्वसिद्धिकराणि च ॥ २६ ॥ अन्यच्च कारणं देवि
त्रिवर्णासि वरानने ॥ मूर्त्तित्रयं त्रिभिर्वर्णैः कुरु देवि स्वकं द्रुतम् ॥ २७ ॥ एवमुक्ता तदा देवैरकरोत्त्रिविधां तनुम् ॥ सितां रक्तां
तथा कृष्णां त्रिमूर्तित्वं जगाम सा ॥ २८ ॥ या सा ब्राह्मी शुभा मूर्तिस्तया सृजति वै प्रजाः ॥ सौम्यरूपेण सुश्रोणी ब्रह्मसृष्टि
विधानतः ॥ २९ ॥ या सा रक्तेन वर्णेन सुरूपा तनुमध्यमा ॥ शंखचक्रधरा देवी वैष्णवी सा कला स्मृता ॥ ३० ॥ सा पाति सकलं विश्वं
विष्णुमायेति कीर्त्यते ॥ या सा कृष्णेन वर्णेन रौद्रा मूर्त्तिस्त्रिशूलिनी ॥ ३१ ॥ दंष्ट्राकरालिनी देवी सा संहरति वै जगत् ॥ या सृष्टिर्ब्रह्मणो
देवी श्वेतवर्णा विभावरी ॥ ३२ ॥ सा कुमारी महाभागा विपुलाब्जदलेक्षणा ॥ सद्यो ब्रह्माणमामन्त्र्य तत्रैवान्तरधीयत ॥ ३३ ॥ सान्तर्हिता
ययौ देवी वरदा श्वेतपर्वतम् ॥ तपस्तप्तुं महत्तीव्रं सर्वज्ञत्वमभीप्सती ॥ ३४ ॥ या वैष्णवी कुमारी तु साप्यनुज्ञाय केशवम् ॥ मन्दराद्रिं
ययौ तप्तुं तपः परमदुश्चरम् ॥ ३५ ॥ या सा कृष्णा विशालाक्षी रौद्री दंष्ट्राकरालिनी ॥ सा नीलपर्वतवरं तपश्चर्तुं ययौ शुभा ॥ ३६ ॥
अथ कालेन महता प्रजाः स्रष्टुं प्रजापतिः ॥ आरब्धवान्न तास्तस्य ववृधुः सृजतः प्रजाः ॥ ३७ ॥ यदा न ववृधुस्तस्य ब्रह्मणो मानस

प्रजाः ॥ तदा दध्यौ किमेतन्मे न तथा वर्द्धते प्रजाः ॥ ३८ ॥ ततो ब्रह्मा हृदा दध्यौ योगाभ्यासेन सुव्रते ॥ चिन्तयन्बुबुधे देवस्तां कन्यां
श्वेतपर्वते ॥ ३९ ॥ तपश्चरन्तीं सुमहत्तपसा दग्धकिल्बिषाम् ॥ ततो ब्रह्मा ययौ तत्र यत्र सा कमलेक्षणा ॥ ४० ॥ तपश्चरन्तीं तां दृष्ट्वा
वाक्यमेतदुवाच ह ॥ ब्रह्मोवाच ॥ किं तपः क्रियते भद्रे कार्यमापेक्ष्य शोभने ॥ ४१ ॥ तुष्टोऽस्मि ते विशालाक्षि वरं वरय कन्यके ॥ सृष्टि
रुवाच ॥ भगवन्नेकदेशस्था नोत्सहे स्थातुमञ्जसा ॥ ४२ ॥ अतोऽर्थे त्वां वरं याचे सर्वगत्वमभीप्सती ॥ एवमुक्तस्तदा देव्या सृष्ट्या ब्रह्मा
प्रजापतिः॥४३॥ उवाच तां तदा देवीं सर्वगा त्वं भविष्यसि ॥ एवमुक्ता तदा तेन सृष्टिः सा कमलेक्षणा॥४४॥ तस्य ह्यङ्के लयं प्राप्ता सा देवी
पद्मलोचना॥तस्मादारभ्य कालात्तु ब्रह्मसृष्टिर्व्यवर्द्धत ॥ ४५॥ ब्रह्मणो मानसाः सप्त तेषामन्ये तपोधनाः ॥ तेषामान्ये ततस्त्वन्ये चतुर्दश भूत
संग्रहः ॥४६॥संस्थाणुजङ्गमानां च सृष्टिः सर्वत्र संस्थिता॥यत्किंचिद्वाङ्मयं लोके जगत्स्थावरजङ्गमम् ॥तत्सर्वं स्थापितं सृष्ट्या भूतं भव्यं
च सर्वदा॥४७॥इति श्रीवराहपुराणे सृष्टिविभागे त्रिशक्तिमाहात्म्ये सृष्टिदेवतानिरूपणं नाम नवतितमोऽध्यायः ॥९०॥ अथ सरस्वतीवर्णनादि
कम ॥ श्रीवराह उवाच ॥ शृणु चान्यं वरारोहे तस्या देव्या महाविधिम् ॥ या सा त्रिशक्तिरुद्दिष्टा शिवेन परमेष्ठिना ॥ १ ॥ तत्र सृष्टिः पुरा
प्रोक्ता श्वेतवर्णा सुरूपिणी ॥ एकाक्षरेति विख्याता सर्वाक्षरमयी शुभा ॥ २ ॥ वागीशेति समाख्याता क्वचिद्देवी सरस्वती ॥ सैव विद्येश्वरी
देवी सैव क्वाप्यमिताक्षरा॥३॥सैव ज्ञाननिधिः क्वापि सैव देवी विभावरी ॥ यानि सौम्यानि नामानि यानि ज्ञानोद्भवानि च॥४॥ तानि तस्या
विशालाक्षि द्रष्टव्यानि वरानने ॥ या वैष्णवी विशालाक्षी रक्तवर्णा सुरूपिणी॥५॥ अपरा सा समाख्याता रौद्री चैव परायणा ॥ एतास्त्रयोऽपि
सिध्यन्ति यो रुद्रं वेत्ति तत्त्वतः ॥ ६ ॥ सर्वा सेयं वरारोहे एकैव त्रिविधा स्मृता ॥ एषा सृष्टिर्वरारोहे कथिता ते पुरातनी ॥ ७ ॥
तया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ॥ या सादौ वर्द्धिता सृष्टिर्ब्रह्मणोऽव्यक्तजन्मनः ॥ ८ ॥ तया तुल्यां स्तुतिं चक्रे तस्या देव्याः
पितामहः ॥ ब्रह्मोवाच ॥ जयस्व सत्यसम्भूते ध्रुवे देवि धरेऽक्षरे ॥ ९ ॥ सर्वगे सर्वजननि सर्वभूतमहेश्वरि ॥ सर्वज्ञा त्वं वरारोहे सर्वसिद्धि
प्रदायिनी ॥ १० ॥ सिद्धिबुद्धिकरे देवि प्रसूतिः परमेश्वरी ॥ त्वं स्वाहा त्वं स्वधा देवि त्वमुत्पत्तिर्वरानने ॥ ११ ॥ त्वमोङ्कारः स्थित.

॥६९॥

देवि वेदोत्पत्तिस्त्वमेव च ॥ देवानां दानवानां च यक्षगन्धर्वरक्षसाम् ॥ १२ ॥ पशूनां वीरुधां चापि त्वमुत्पत्तिर्वरानने ॥ विद्या विद्येश्वरी
सिद्धा प्रसिद्धाहं सुरेश्वरी ॥ १३ ॥ सर्वज्ञा त्वं वरारोहे सर्वसिद्धिविधायिनी ॥ सर्वगा गतसन्देहा सर्वशत्रुनिबर्हिणी ॥ १४ ॥ सर्वविद्येश्वरी
देवी नमस्ते स्वस्तिकारिणि ॥ ऋतुस्नातां स्त्रियं गच्छेद्यस्त्वां स्मृत्वा वरानने ॥ १५ ॥ तस्यावश्यं भवेत्सृष्टिस्त्वत्प्रसादात्प्रजेश्वरि ॥
स्वरूपा विजया भद्रे सर्वशत्रुविनाशिनी ॥ १६ ॥ इति श्रीवराहपुराणे त्रिशक्तिमाहात्म्ये सृष्टिसरस्वतीवर्णनादिकं नामैकनवतितमोऽ
ध्यायः ॥ ९१ ॥ अथ वैष्णवीमाहात्म्यम् ॥ श्रीवराह उवाच ॥ या मन्दरगता देवी तपः कर्तुं तु वैष्णवी ॥ राजसी परमा शक्तिः कौमारव्रत
धारिणी ॥ १ ॥ सैकाकिनी तपस्तेपे विशालायां तु शोभना ॥ तस्यास्तपन्त्याः कालेन महता क्षुभितं मनः ॥२॥ तस्मात्क्षोभात्समुत्तस्थुः
कुमार्यः सौम्यलोचनाः ॥ नीलकुञ्चितकेशान्ता बिम्बोष्ठ्यायतलोचनाः ॥ ३ ॥ नितम्बरशनोद्दामनूपुराढ्याः सुवर्चसः ॥ एवंविधाः स्त्रियो
देव्याः क्षोभिते मनसि द्रुतम् ॥ ४ ॥ उत्तस्थुः शतसाहस्राः कोटिशो विविधाः प्रजाः ॥ दृष्ट्वा कुमार्यः सा देवी तस्मिन्नेव गिरौ शुभाः ॥५॥
तपसा निर्ममे देवि पुरं हर्म्यशताकुलम् ॥ विशालरथ्यं सौवर्णप्रासादैरुपशोभितम् ॥ ६ ॥ अन्तर्जलानि वेश्मानि मणिसोपानवन्ति च ॥
रत्नजालगवाक्षाणि आसन्नोपवनानि च ॥ ७ ॥ असंख्यातानि हर्म्याणि तथा कन्या धराधरे ॥ प्राधान्येन प्रवक्ष्यामि कन्यानामानि
शोभने ॥ ८ ॥ विद्युत्प्रभा चन्द्रकान्तिः सूर्यकान्तिस्तथापरा ॥ गम्भीरा चारुकेशी च सुजाता मुञ्जकेशिनी ॥ ९ ॥ घृताची चोर्वशी चान्या
शशिनी शीलमण्डिता ॥ चारुकन्या विशालाक्षी धन्या पीनपयोधरा ॥ १० ॥ चन्द्रप्रभा गिरिसुता तथा सूर्यप्रभामृता ॥ स्वयम्प्रभा चारु
मुखी शिवदूती विभावरी ॥ ११ ॥ जया च विजया चैव जयन्ती चापराजिता ॥ एताश्चान्याश्च शतशः कन्यास्तस्मिन्पुरोत्तमे ॥१२॥ देव्या
अनुचराः सर्वाः पाशाङ्कुशधराः शुभाः ॥ ताभिः परिवृता देवी सिंहासनगता शुभा ॥ १३ ॥ सुसितैश्चामरैः स्त्रीभिर्वीज्यमाना विलासिनी ॥ कौमारं
व्रतमास्थाय तपः कर्तुं समुद्यता ॥१४॥ पूज्यमाना वरस्त्रीभिः कुमारीभिः समन्ततः ॥ सर्वाङ्गशोभिनी देवी यावदास्ते तपोऽन्विता ॥१५॥
तावदागतवांस्तत्र नारदो ब्रह्मणः सुतः ॥ तं दृष्ट्वा सहसा देवी ब्रह्मपुत्रं तपोधनम् ॥ १६ ॥ विद्युत्प्रभामुवाचेदमासनं दीयतामिति ॥ पाद्य

माचमनीयं च क्षिप्रमस्मै प्रदीयताम् ॥१७॥ एवमुक्ता तदा देव्या कन्या विद्युत्प्रभा शुभा॥आसनं पाद्यमर्घ्यं च नारदाय न्यवेदयत् ॥१८॥ ततः कृतासनं दृष्ट्वा प्रणतं नारदं मुनिम् ॥ उवाच देवी वचनं हर्षेण महतान्विता ॥ १९ ॥ स्वागतं भो मुनिश्रेष्ठ कस्माल्लोकादिहागतः ॥ किं कार्यं वद ते कृत्यं मा ते कालात्ययो भवेत् ॥ २०॥ एवमुक्तस्तदा देव्या नारदः प्राह लोकवित् ॥ ब्रह्मलोकादिन्द्रलोकं तस्माद्रौद्रमथाचलम् ॥ २१ ॥ ततस्त्वामिह देवेशि द्रष्टुमभ्यागतः शुभे ॥ एवमुक्त्वा मुनिः श्रीमांस्तां देवीमन्ववैक्षत ॥२२॥ दृष्ट्वा मुहूर्तं देवेशि विस्मितो नारदोऽभवत् ॥ अहो रूपमहो कान्तिरहो धैर्यमहो वयः ॥ २३ ॥ अहो निष्कामता देव्या इति स्वेदं तु नाययौ ॥ देवगन्धर्वसिद्धानां यक्षकिन्नररक्षसाम् ॥ २४ ॥ न रूपमीदृशं क्वापि स्त्रीष्वन्यासु प्रदृश्यते ॥ एवं संचिन्त्य मनसा नारदो विस्मयान्वितः ॥ २५ ॥ प्रणम्य देवीं सहसा उत्पपात नभस्तलम् ॥ गतश्च त्वरया युक्तः पुरीं दैत्येन्द्रपालिताम् ॥ २६ ॥ महिषाख्येन भूतेशि समुद्रान्तःस्थितां पुरीम् ॥ तत्रासपाद भगवानसुरं महिषाकृतिम् ॥ २७ ॥ दृष्ट्वा लब्धवरं वीरं देवसैन्यान्तकं महत् ॥ स तेन पूजितो भक्त्या तदा लोकचरो मुनिः ॥ २८ ॥ प्रीतात्मा नारदस्तस्मै देव्या रूपमनुत्तमम् ॥ आचचक्षे यथान्यायं यद्वृत्तं देवतापुरे ॥ २९ ॥ नारद उवाच ॥ असुरेन्द्र शृणुष्वैकं कन्यारत्नं समाहितः ॥ त्रैलोक्यं वरदानेन स्वाधीनं ते चराचरम् ॥ ३० ॥ ब्रह्मलोकादहं दैत्य मन्दराद्रिमुपागतः ॥ तत्र देवीपुरं दृष्टं कुमारीशतसङ्कुलम् ॥ ३१ ॥ तत्र प्रधाना या कन्या तापसी व्रतचारिणी ॥ सा देवदैत्ययक्षाणां मध्ये काचिन्न दृश्यते ॥ ३२ ॥ यादृशी सा मया दृष्टा तादृशी काण्डमध्यतः ॥ भ्रमता चेदृशी दृष्टा न कदाचिन्मया सती ॥ ३३ ॥ तस्याश्च देवगन्धर्वा ऋषयः सिद्धचारणाः ॥ उपासाञ्चक्रिरे सर्वे येऽप्यन्ये दैत्यनायकाः ॥ ३४ ॥ तां दृष्ट्वा वरदां देवीमहं तूर्णमिहागतः ॥ अजित्वा देवगन्धर्वान्न तां जयति कश्चन ॥ ३५ ॥ एवमुक्त्वा क्षणं स्थित्वा तमनुज्ञाप्य नारदः ॥ यथागतं ययौ धीमानन्तर्द्धानेन तत्क्षणात् ॥ ३६ ॥ इति श्रीवराहपुराणे आदिकृतवृत्तान्ते त्रिशक्तिमाहात्म्ये श्रीवैष्णवीमाहात्म्यं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥ अथ मन्त्रिमहिषासुरसंवादः ॥ श्रीवराह उवाच ॥ गते तु नारदे दैत्यश्चिन्तयामास तां शुभाम् ॥ कथितां नारदमुखाच्छ्रुत्वा विस्मितमानसः ॥ १ ॥ तामेव चिन्तयन् शर्म न लेभे दैत्यसत्तमः ॥ मन्त्रिणं चानयामास अलंशर्माण

मुत्तमम् ॥ २ ॥ तस्याष्टौ मन्त्रिणः शूरा नीतिमन्तो बहुश्रुताः ॥ प्रघसो विघसश्चैव शङ्कुकर्णो विभावसुः ॥ ३ ॥ विद्युन्माली सुमाली च पर्जन्यः क्रूर एव च ॥ एते मन्त्रिवरास्तस्य प्राधान्येन प्रकीर्तिताः ॥ ४ ॥ ते दानवेन्द्रमासीनमूचुः कृत्यं विधीयताम् ॥ तेषां तद्वचनं श्रुत्वा दानवेन्द्रो महाबलः ॥ ५ ॥ उवाच कन्यालाभार्थं नारदावाप्तनिश्चयः ॥ महिष उवाच ॥ मह्यं तु कथिता बाला नारदेन महर्षिणा ॥ ६ ॥ सा चाजित्य सुराध्यक्षं न लभ्येत वराङ्गना ॥ एतदर्थं भवन्तो वै कथयन्तु विमृश्य मे ॥ ७ ॥ कथं सा लभ्यते बाला कथं देवाश्च निर्जिताः ॥ भवेयुरिति तत्सर्वं कथयन्तु द्रुतं मम ॥ ८ ॥ एवमुक्तास्ततः सर्वे कथयामासुरञ्जसा ॥ एवमुक्तस्तथोवाच प्रघसो दानवेश्वरम् ॥ ९ ॥ या सा ते कथिता दैत्य नारदेन महासती ॥ सा शक्तिः परमा देवी वैष्णवी रूपधारिणी ॥ १० ॥ गुरुपत्नी राजपत्नी तथा सामन्तयोषितः ॥ जिघृक्षन् नश्यते राजा तथागम्यागमेन च ॥ ११ ॥ प्रघसेनैवमुक्तस्तु विघसो वाक्यमब्रवीत् ॥ सम्यगुक्तं प्रघसेन तां देवीं प्रति पार्थिव ॥ १२ ॥ यदि नाम मतैक्यन्तु बुद्धिः स्मरणमागता ॥ वरणीया कुमारी तु सर्वदा विजिगीषुभिः ॥ १३ ॥ न स्वतन्त्रेण कन्यायाः कार्यं क्वापि प्रकर्षणम् ॥ यदि वो रोचते वाक्यं मदीयं मन्त्रिसत्तमाः ॥ १४ ॥ तदानीं तां शुभां देवीं गत्वा याचन्तु मन्त्रिणः ॥ यो महात्मा भवेत्तस्या बन्धुस्तं याचयामहे ॥ १५ ॥ साम्नैवादौ ततः पश्चात्करिष्यामः प्रदानकम् ॥ ततो भेदं करिष्यामस्ततो दण्डं क्रमेण च ॥ १६ ॥ अनेन क्रमयोगेन यदि सा नैव लभ्यते ॥ ततः सन्नह्य गच्छामो बलाद्धर्तुमिमां शुभाम् ॥ १७ ॥ विघसेनैवमुक्तास्तु शेषास्तु मन्त्रिणो वचः ॥ शुभमूचुः प्रशंसन्तः सर्वे हर्षितमानसाः ॥ १८ ॥ साधूक्तं विघसेनेदं पत्नीं प्रति वराननाम् ॥ तदैव क्रियतां शीघ्रं दूतस्तत्र विसर्ज्यताम् ॥ १९ ॥ यः सर्वशास्त्रनीतिज्ञः शुचिः शौर्यसमन्वितः ॥ तस्माज्ज्ञात्वा तु तां देवीं वर्णतो रूपतो गुणैः ॥ २० ॥ पराक्रमेण शौर्येण शौण्डीर्येण बलेन च ॥ बंधुवर्गेण सामग्र्या तत्स्थानकरणेन च ॥ २१ ॥ एवं ज्ञात्वा तु तां देवीं ततः कार्यं विधीयताम् ॥ ततः सपदि दैत्यस्य तद्वचः साधु साध्विति ॥ २२ ॥ प्रशशंसुर्वरारोहे विघसं मन्त्रिसत्तमम् ॥ प्रशस्य सर्वे तं दूतं सन्देष्टुमुपचक्रमुः ॥ २३ ॥ विद्युत्प्रभं महाभागं बहुमायाविदं शुभम् ॥ विसर्जयित्वा तं दूतं विघसो वाक्यमब्रवीत् ॥ २४ ॥ क्रियतां विजयस्तावद्देवसैन्यं प्रति प्रभो ॥ सन्नह्यन्तां दानवेन्द्राश्चतुरङ्गबलेन ह ॥ २५ ॥ अनु

रेन्द्र सुरैर्भग्नैस्त्वत्पराक्रमभीषितैः ॥ सा कन्या वशतामेति त्वयि शक्रे समागते ॥२६॥ लोकपालैर्जितैः सर्वैस्तथैव मरुतां गणैः ॥ नागैर्विद्याधरैः
सिद्धैर्गन्धर्वैः सर्पभोजनैः ॥२७॥ रुद्रैर्वसुभिरादित्यैस्त्वमेवेन्द्रो भविष्यसि ॥ इन्द्रस्य ते शतं कन्या देवगन्धर्वयोषितः ॥ २८ ॥ वशमायान्ति
सापि स्यात्सर्वथा वशमागता ॥ एवमुक्तस्तदा दैत्यः सेनापतिमुवाच ह ॥२९॥ विरूपाक्षं महामेघवर्णं नीलाञ्जनप्रभम् ॥ आनीयतां द्रुतं सैन्यं
हस्त्यश्वरथपत्तिनाम् ॥३०॥ येन देवान्सगन्धर्वान्क्षयामि युधि दुर्जयान् ॥ एवमुक्ते विरूपाक्षे तदा सेनापतिर्द्रुतम् ॥३१॥ आनिनाय महत्सै
न्यमनन्तमपराजितम् ॥ एकैको दानवस्तत्र वज्रहस्तसमो युधि ॥ ३२ ॥ एकैकं स्पर्धते देवं जेतुं स्वेन बलेन ह ॥ तेषां प्रधानभूतानामर्बुदं नव
कोटयः ॥३३॥ एकस्य येषामनुयाति तावद्बलमथोर्जितम् ॥ तेषां नैकसहस्राणि दैत्यानां तु महात्मनाम्॥३४॥समितिं चक्रुरव्यग्रास्तदा दैत्याः
प्रहारिणः ॥ प्रयाणं कारयामासुर्देवसैन्यजिघांसया ॥३५॥ विचित्रयाना विविधध्वजाग्रा विचित्रशस्त्रा विविधोग्ररूपाः ॥ दैत्याः सुराञ्जेतुमिच्छन्त
उच्चैर्नदन्तुरात्तायुधयुक्तहस्ताः ॥ ३६ ॥ इति श्रीवराहपुराणे त्रिशक्तिमाहात्म्ये मन्त्रिमहिषासुरसंवादो नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥
अथ सुरासुरयुद्धवर्णनम् ॥ वराह उवाच ॥ ततो महिषदैत्यस्तु कामरूपी महाबलः ॥ मत्तहस्तिनमारुह्य ययासुर्मेरुपर्वतम् ॥ १ ॥ तत्रे
न्द्रपुरमासाद्य देवैः सह शतक्रतुम् ॥ अभिदुद्राव दैत्येन्द्रो देवान्क्रोधसमन्वितः ॥ २ ॥ आदाय स्वानि शस्त्राणि वाहनानि विशेषतः ॥ अधि
ष्ठाय सुरानाजौ दद्रुवुर्मुदिता भृशम् ॥ ३ ॥ तेषां प्रववृते युद्धं तुमुलं लोमहर्षणम् ॥ घोरं प्रचण्डयोधानामन्योन्यमभिगर्जताम् ॥ ४ ॥ तत्रा
ञ्जनो नीलकुक्षिर्मेघवर्णो बलाहकः ॥ उदाराक्षो ललाटाक्षः सुभीमो भीमविक्रमः ॥ ५ ॥ स्वर्भानुश्चाष्ट दैत्यास्ते वसून्दुद्रुवुराहवे ॥ यथासं
ख्येन तद्वच्च दैत्या द्वादश चापरे ॥६॥ आदित्यान्दैत्यवर्यास्तु तेषां प्राधान्यतः शृणु ॥ भीमो ध्वांक्षो ध्वस्तकर्णः शङ्कुकर्णस्तथैव च ॥७॥
वज्रको ज्योतिर्वीर्यश्च विद्युन्माली तथैव च ॥ रक्ताक्षो भीमदंष्ट्रस्तु विद्युज्जिह्वस्तथैव च ॥ ८ ॥ अतिकायो महाकायो दीर्घबाहुः कृतान्तकः ॥
एते द्वादश दैत्येन्द्रा आदित्यान्युधि दुद्रुवुः ॥९॥ स्वकं सैन्यमुपादाय तद्वदन्येऽपि दानवाः॥ रुद्रान्दुद्रुवुरव्यग्रा यथासंख्येन कोपिताः ॥१०॥
कालः कृतान्तो रक्ताक्षो हरणो मित्रहा नलः ॥ यज्ञहा ब्रह्महा गोघ्नः स्त्रीघ्नः संवर्तकस्तथा ॥ ११ ॥ इत्येते दश चैकश्च दैत्येन्द्रा युद्ध

दुर्मदाः ॥ यथासंख्येन रुद्रांस्तु दुद्रुवुर्भीमविक्रमाः ॥ १२ ॥ शेषान्देवान् शेषदैत्या यथायोगमुपाद्रवन् ॥ स्वयं महिषदैत्यस्तु इन्द्रं दुद्राव
वेगतः ॥ १३॥ स चापि बलवान्दैत्यो ब्रह्मणो वरदर्पितः ॥ अवध्यः पुरुषेणाजौ यत्रापि स्यात्पिनाकधृक् ॥१४॥ आदित्यैर्वसुभिः सार्द्धं रुद्रैश्च
निहता भृशम् ॥ असुरा यातुधानाश्च संख्यापूरणकारकाः ॥ देवानामपि सैन्यानि निहतान्यसुरैर्युधि ॥ १५ ॥ एवम्भूते तत्र भग्ने देवेन्द्रो
विद्रुताः सुराः ॥ अर्दिता विविधैः शस्त्रैः शूलपट्टिशमुद्गरैः ॥ १६ ॥ गतवन्तो ब्रह्मलोकमसुरैरर्दिताः सुराः ॥ १७ ॥ इति श्रीवराहपुराणे
त्रिशक्तिमाहात्म्ये सुरासुरयुद्धवर्णनं नाम चतुर्नवतितमोऽध्यायः ॥९४ ॥ अथ महिषासुरवधः ॥ श्रीवराह उवाच॥ अथ विद्युत्प्रभो दैत्यस्तथा
दूतो विसर्जितः ॥ प्रणम्य प्रयतो भूत्वा कुमारीशतसङ्कुलाम् ॥ १ ॥ अस्थाने विजयापन्नस्ततो वचनमब्रवीत् ॥ विद्युत्प्रभ उवाच ॥ देवि
पूर्वमृषिस्त्वासीदादिसर्गैकसम्भवः ॥ २ ॥ सखा सारस्वतो जातः सुपार्श्वो नाम वै विभुः ॥ तस्याभवन्महातेजाः सिन्धुद्वीपः प्रतापवान्॥३॥
स हि तीव्रं तपस्तेपे माहिष्मत्यां पुरोत्तमे ॥ कुर्वतस्तु तपो घोरं निराहारस्य शोभने॥४॥ आद्या तु विप्रचित्तेः सा सुता परमशोभना ॥ माहि
ष्मतीति विख्याता रूपेण सदृशी भुवि॥५॥ सा सखीभिः परिवृता विहरन्ती यदृच्छया ॥ आगता मन्दरद्रोण्यां तत्रापश्यत्तपोवनम् ॥६॥ मुने
रस्तरसंज्ञस्य विविधद्रुममण्डितम्॥लतागृहैस्तु विविधैर्बकुलैर्लकुचैस्तथा ॥७॥ चन्दनैः स्पन्दनैः सालैः सरलैरुपशोभितम्॥विचित्रवनखण्डैश्च
भूषितं तु महात्मनः ॥८॥दृष्ट्वाश्रमपदं रम्यं साऽसुरी कन्यका शुभम्॥ माहिष्मती वरारोहा चिन्तयामास भामिनी ॥९॥ भीषयित्वाऽहमेनं तु
तापसं त्वाश्रमे स्वयम्॥तिष्ठामि क्रीडती सार्द्धं सखीभिः परमार्चिता॥१०॥एवं सञ्चिन्त्य सा देवी महिषी सम्बभूव ह॥सखीभिः सह विशेषेश
तीक्ष्णशृङ्गाग्रधारिणी॥११॥ तमृषिं भीषितुं ताभिः सह गत्वा वरानना ॥ अतो विभीषितस्ताभिस्तां ज्ञात्वा ज्ञानचक्षुषा ॥१२॥ आसुरीं
क्रोधसम्पन्नः शशाप शुभलोचनाम् ॥ यस्माद्भीषयसे मां त्वं महिषीरूपधारिणी ॥ १३ ॥ अतो भव महिष्येव पापकर्मे शतं समाः ॥ एव
मुक्ता ततः सा तु सखीभिः सह वेपती ॥ १४ ॥ पादयोर्न्यपतत्तस्य शापान्तं कुरु जल्पती ॥ तस्यास्तद्रुदितं श्रुत्वा स मुनिः करुणा
न्वितः ॥ १५॥ शापान्तमकरोत्तस्य वाक्यं चेदमुवाच ह ॥ अनेनैव स्वरूपेण पुत्रमेकं प्रसूय वै॥ शापान्तो भविता भद्रे मद्वाक्यं न मृषा

